# प्राकृतलक्षणम्

( प्राकृतव्याकरणम् )

श्रीमत् पण्डितवरचण्डेन विरचितम्

—※—

साहित्याचार्य्योपाधिकेन

श्रीयुक्त रेवतीकान्त भट्टाचार्य्येण

सम्पादितम्

संस्कृतपुस्तकालयात्

श्रीअखिलबन्धुभट्टाचार्य्येण

प्रकाशितम् ।

१९२३

——





मूल्यमेकटङ्कम्

# निवेद्यम्—

सा हि बहुवत्सरदतीता कथा—यदाहं प्राकृतालोच-
नावसरे प्राग् वाराणसीमध्यवसम्; तदा तत्र कस्यचन
गतद्रुतीरमध्युषितस्य पण्डितस्य सविधे ग्रन्थमिममव-
लोक्य लिखितुमधीतुञ्च महती मे स्पृहा समवजायत;
किन्तु सोऽयं जनः सनिर्व्वन्धातिशयानुरोधेन किंवा सकल-
स्पृहिजनलालसात्मकेन केनचिद् वस्तुविनिमयेनापि तम-
र्पयितुमस्वीकरोत्। तेनातिमनःक्षुण्णेन मया ततःप्रभृति
भूयिष्ठंतिथिपर्य्यन्तं तत्पुस्तकमितस्ततोऽनुसन्धारयतापि न
कुत्राप्यनुसन्धानसुत लब्ध्योदन्तश्च समासादितम्। हन्त!
ततस्तेन कति वासरं स्वीयभाग्यं भारतीयानामने-
केषां विपश्चितामममानुषिव्यवहारञ्च मनसीकृत्य न्यक्कृतं
तन्देदानीं स्मृतौ परिस्फुरति। ततश्च गच्छता कालेन
दृष्ट्रा स्वोदरप्रतिमेन सुहृदा श्रीमन्निताद्हरि दे एम, ए
महोदयेन सहैकदा मम तादृग् परिभवकथाक्रमेण किल
तेनानेन महानुभवपदलाञ्छनेन स्वीयपाठ्र पूर्व्वापरपत्र-
रहितमन्तरान्तरा च च्छिन्नमेकं पुस्तकं मे प्रदत्तम्।
प्राप्य च तत् किमानन्दरसाप्लुतं मे चेतस्तदानीं जातं
तद्व्याकर्त्तुं संप्रति सहस्रेण मुखेनाप्यसमर्थोऽयं वराकः।

अनन्तरञ्च कृच्छ्रातिकृच्छ्रचेष्टया पुष्कलेनोद्यमेन च जरमन् (German) देशतो मुद्रितमपरमेकं पुस्तकं संगृह्य पुरा प्राप्ताभिभवं तथा पृथुलं जाड्यञ्च मनसः कथं कथमपि समापयितुं जनपुष्ठानाञ्च प्रयाशमन्तरा पुस्तकमधीतुं संगृहीतुञ्चा यमस्य मुद्रणे मे समधिको यत्नः, सर्व्वविधस्यापि क्लेशस्य स्वीकारश्च । प्रासंगे—यद्यपि सभ्याः प्राकृतव्याकरणमिदं पूतदृष्ट्या साग्रहमाद्रियन्ते तर्हि एतावान् प्रयाशो मे साफल्यो भविष्यति—भविष्यति तु प्राकृतकाव्यनाटकादीन् दुष्प्राप्यान् लुप्तप्रायांश्च ग्रन्थान् क्रमशः संगृह्य मुद्रयित्वा च प्राकृतरसरसिकान् सुखयितुमर्हिष्यत्ययं जनः । परिशेषे च सानुनयमभ्यर्थये सभ्यान् परमेश्वरञ्च सर्व्वान्तःकरणेन—यन्मम तादृगस्य सुहृदः सर्व्वविधमभ्युदयो दीर्घायुश्च कामयतामिति सनिर्व्वन्धा प्रार्थनास्य वराकस्येति किं बहुना ।

| | | |
|---|---|---|
| कलिकाता<br>१२३० वङ्गाब्दीया<br>नागपञ्चमी | } | विधेय—<br>सम्पादकस्य |

## आभाषः—

प्राकृतलक्षणं हि नाम प्राकृतसूत्रमयं प्राकृतभाषायाः व्याकरणस्यान्यतमम्। इदं तावद्व्याकरणं श्रीमत्-पण्डितवर्य्येण महामतिना चण्डेन विरचितम्। स च चण्डोऽतिप्राचीनतमो जैनधर्म्मावलम्बो कश्चिन्मनस्वि-प्रधानः, कदा कस्मिन्नेवप्रादुर्भूय भारतमिदमलङ्क-कारेति विशिष्टप्रमाणेन प्रमाणीकर्त्तुमशक्नुवन्नेव सभ्याः। एतद्ग्रन्थस्य मङ्गलाचरणपाठेन केवलं तस्य जैनधर्म्मावलम्बित्वमात्रमन्तरेण किमपि ज्ञातुमलं स्मः। यथा—"प्रणम्य शिरसा वीरं स्वल्पैर्व्यापिभिरक्षरैः। लक्षणं प्राकृतं वक्ष्ये किञ्चिद्वृद्धमतादहम्॥" इति। अन्यदस्य प्राचीनत्वे प्रामाण्ये च मलयगिरेः केदारभट्टस्य च वाक्यतः स्फुटत एव विशिष्टेन प्रतिपत्तिरस्ति। तौ तु मन्येते व्याकरणमिदं महर्षिपाणिना रचितम्, तत्प्रमाणयितुञ्च भट्टकेदारेण स्वकीये ग्रन्थे समुद्धृतमेतद्वाक्यकदम्बकम्, तच्च—"पाणिनिर्भगवान् प्राकृतलक्षणमपि वक्ति संस्कृता-दन्यत्, दीर्घाक्षरञ्च कुत्रचिदेकं मात्रमुपैति" इति। "ह्रस्वत्वं संयोगे" इति चण्डकृतसूत्रमप्यवलोक्य पूर्व्वोक्त-वाक्यस्यात्र सम्बन्धोऽस्तीति निर्णीयते तेन सन्दर्भकृता। तदत्यन्तं हेयं प्रज्ञावताम; यतो वाक्येनानेनैवं निर्द्दिशति यत् पाणिनिनैव "प्राकृतलक्षणं व्याकरणमिदं व्यरचि"

इति। सूर्य्यप्रज्ञप्तिनामधेयस्य प्रसिद्धजैनग्रन्थस्य टीकायां मलयगिरे: स्वाभिप्रायोऽतिप्राञ्जलया भाषया सन्निवद्धोऽस्ति, तच्च पण्डितवर्य्येण श्रीयेवार्‌महोदयेनावतारितं समालोचितञ्च इन्‌दिसे ष्ट्‌ डि एन्‌ नामकग्रन्थे विशेषेण संक्षेपतस्तस्येयमेवाशय:, यत्‌ हेमचन्द्रकृतप्राकृतसूत्राणि केवलमपभ्रंशप्राकृतमात्रेष्वेव प्रयुज्यानि, किन्तु तेन तानि साधारणप्राकृते समाविशन्तीति विषमभ्रान्तिमतमवकल्पितानि, परन्तु कथितञ्च—"बहुवचनं प्राकृतत्वात्‌; उक्तञ्च बहुवचने द्विवचनम्‌।" इति "द्वित्वे बहु: वचने" इति सूत्रार्थतुलनामूलकेन तस्य तद्वचनप्रवृत्तिरिति। एवमुक्ताशयेन चोभयोर्म्मतमाकलय्य समालोच्य च प्रातीच्यकोविदमुख्येन रडल्फ्‌ हरनल्‌ महोदयेन सिद्धान्तितम्‌ यदनयोर्म्मं तत्‌ जनश्रुतिमूलकं न तात्त्विकमिति, येन तौ स्वपक्षमनुकूलप्रमाणेन प्रमाणयितुं नाशकताम्‌; नितरां तयोर्वाक्यत: मात्रमस्माभिश्चण्डस्य पुरातनत्वमन्तरेण नान्यत्‌ प्राप्तव्यमिति स्फुटमवकल्पितं वाणीवरपुत्रेण तेनैव विदुषा समालोचनावसरे प्राकृतानाम्‌। उक्तञ्चान्यदपि पालि-प्राकृतयो: पर्य्यालोचनयास्माभिरेवमेवानुमातुं शक्यते यच्चण्डनिर्दिष्टप्राकृतं तद्धि भारतीयभाषाध्वनितत्त्वस्याधस्तनावस्थां यथायथं समादिशति प्रभूतसारत्वेन सहृदयानां

हृदयम्, एवं व्याकरणमवलोक्य भूय एवानुमातुं समर्थ्यते यच्चण्डस्य व्याकरणरचनाप्रक्रमे प्राकृतं न भागत्रयेण विभक्तमासीत्। केवलं साधारणप्राकृतमात्रमेव लोकव्यवहारविषयोभूतमास्ते। "आर्षेत्र प्राकृतं बहुलं भवति" इत्यनेनानुमातुं समर्थ्यते यदार्षा तर्हि कथं कथमपि नियमाधीनं नाभवत्। ततस्त्वधस्तने काले एकमेव प्राकृतं साधारणप्राकृतं मागधिप्राकृतम् अपभ्रंशप्राकृतमिति त्रितयभागेन विभक्तं गतम्, तद् यदा भिन्नत्वमापन्नं तत् समयोऽस्माभिरशोकस्य शिलोत्कीर्णतोबाहुल्यमवगन्तुं शक्यते। उच्यते तावत् पण्डितकान्निंहाम् सहोदयेन करम्पास् इनिस्क्रिप्सनम् इण्डिकरम् ग्रन्थे, यत्तस्य समासत इयमेवाशयः—"भारतीयभाषाज्ञाने अशोकस्य शिलालिपिरेव प्रकृष्टं प्रमाणम्। तस्माद् ज्ञातुमर्हामो वयं यत् खीष्टपूर्व्वेचिहायनीयभारतीयभाषासमुच्चयानां बोधप्रतिपत्तये निःसन्देहा विश्वासजनिका च सैव लिपिरिति।" तत् पाठेन नूनमेवमेवं समुत्पद्यते ज्ञानं यदाहिमालयाद् विन्ध्यस्था उत सिन्धुतो गङ्गापर्य्यन्तभूखण्डस्थिता लोका एकयैव भाषया प्रथमतः स्वाभिप्रायं व्याकुर्व्वन् इति। तच्च यद्यप्यस्माभिर्भौगलिकविचारणया दिशा पर्य्यालोच्यते; तर्हि नूनमियमेव प्रतिपत्तिर्वाढं समुपजायते, मुयद्भूखण्डञ्च

तद् यदि "पञ्चनदमुज्जयिनीमगधञ्चेति" नामत्रयेण व्यपदिश्यते तर्हि पूर्व्वोपदिष्टभाषात्रयाणामर्थसङ्गतित्वे नातिप्रसङ्गः नाप्ययौक्तिकञ्चेति। तत् कस्मात् कियन्तं यावदेकैकशः खण्डं परिकल्पितं तेनैव पण्डितेन तत् तस्य रचितग्रन्थे मानचित्ते च निर्द्दिष्टमस्ति, तत् परमार्थ-ज्ञानमिच्छुना तत्र ज्ञातव्यमिति। कथितासु त्रितयासु भाषासु पञ्चनदीया यत्र रकारं पठन्ति, तत्र तत्र मागधीया लकारमधीयते। अतः प्रकल्प्यते तेनैव पण्डितेन या पञ्चनदीया भाषा सा यद्यपभ्रंशाख्ययाभि-धीयतेऽस्माभिस्तर्हि कापि न हानिः, समाधानस्याप्य-सङ्गतिश्च। किञ्चान्यत् हेमचन्द्रेण किल तद्, एतद्, इदमिति शब्दत्रयस्य षष्ठ्यामेकवचने 'से' बहुवचने 'सिं' इति यन्निर्द्दिष्टम्, उल्लेखितञ्च तदुपक्रमे "अपरोऽ-प्यस्ति कश्चिद् वैयाकरणिकः यः शब्दानामेषामुत्तरतः षष्ठ्या बहुवचने 'सि' प्रत्ययोऽप्यभिकाङ्क्षति" इति यथा तस्य तृतीयप्रकरणीयैकाशीतिः सूत्रम्—"इदन्तदामपि स्यादेशं कश्चिदिच्छति" इति वचसान्यतमस्य वैया-करणिकस्य यन्नामोल्लेखमस्माभिरवलोक्यते सोऽयं वैया-करणिको न प्राकृतप्रकाशकृद्वररुचिरिति, यतो वररुचि-हेमचन्द्रयोर्मतमपार्थक्यमेवात्रान्यतमो हेतुः। सुतरां तन्निर्द्दिष्टो ैयाकरणखण्ड इति तेषां प्राचीनतत्त्वालोच-

यितृणां मतम्। एवमपि च यत् वररुचेर्व्याकरणस्य द्वितीय-प्रकरणीय-द्वितीयसूत्रम् * तत् चण्डस्य व्यञ्जन-विधानीयचतुस्त्रिंशत् सूत्रेण † सह तुलनया तदधस्तन-कालेन रचितमिति सहजत एव प्रतीतिरुत्पद्यते।

अपरं तावत् रासमालानामधेयजैनग्रन्थेऽस्ति हेमचन्द्रस्य संक्षिप्तं जीवनचरितम्; तत् पाठेनैवमेवं प्रतिपत्तिर्भवति, यत् ख्रीष्टीयैकादशमध्यभाग एव हेमचन्द्रस्याविर्भाव-कालः। एवं प्राकृतप्रकाशकारो वररुचिर्हर्षविक्रमा-दित्यस्य सामयिकः ख्रीष्टीयषष्ठशताब्द्यामुद्भूत इति प्रमाणेन प्रमाणीकृतं प्रत्नतत्त्वज्ञवृन्दैः। नितरामेष एव बोधः प्रभवति तराम्; यदुभाभ्यामेवोर्द्धतनकालवर्त्तित्वं चण्डस्येति। स च कालो बहुप्रमाणेन युक्त्या निदर्शनेन च ख्रीष्टपूर्व्वतृतीयशरदभ्यन्तरः एवावकल्पितः प्रज्ञावद्भि-रिति किमत्राधिकवागुपन्यासेन।

अपि यत् प्राकृतभाषाया उत्कर्षं प्राचीनत्वादिकञ्च तत् यथायथमुपरिष्टाद्विव्रियते। इदानीं तद्भाषायामधि-कृत्य किञ्चित् प्रस्तूयते।

---

* कगचजतदपयवां प्रायो लोपः।
इति वररुचिः। २—२ सूत्रम्।

† तृतीययोः स्वरौ वा कगचजतपदपयवां प्रायो लुक्।
इति चण्डः। ३—३४।

## प्राकृतभाषा—

सन्तीह भारतवर्षे नानाविधाः भाषाः। तासु किलार्थ्यनाटकादिग्रन्थेषु प्राकृतभाषायाः समधिको व्यवहारः समवलोक्यते। न केवलं व्यवहारः, तया भाषया रचितसुभाषिता ग्रन्थचया अपि समुपलभ्यन्ते। तेषु गौड़वधप्राकृतमयमहाकाव्ये प्राकृतभाषामधिकृत्याह स्म वाक्पतिकविः—

"सअलाओ इमं वाआ विसन्ति एत्तोअ णेन्ति वाआओ।
एन्ति समुद्दं चिअ णेन्ति साअराओच्चिअ जलाइं॥
[ सकला इमं वाचो विशन्ति इतश्च निर्यन्ति वाचः।
आगच्छन्ति समुद्रमिव निर्गच्छन्ति सागरादिव जलानि॥ ]

इति छाया।

वाक्पतिवचनस्यायमेवाशयः, प्राकृतभाषा कुतश्चिदपि भाषातः नोत्पन्ना, परमार्थ्यगीरपि एतस्याः उद्भूता, पुनस्तस्यामपि विलीनतामापन्ना, पाणिन्यादिवैयाकरणानुशासिता वाणी तत्कालप्रचलितकथितापभ्रंशभाषातः उद्भूय परतः कारणकूटेन संस्कृतस्य प्रभावमाहात्म्येन न्यूनत्वमुपगता। प्राकृतभाषयास्तु

किञ्चिदपि हीनत्वं न घटत इति तस्य सिद्धान्तितं मतम्।

दृश्यते तावत् प्राकृतशब्दः बहुविधया दिशा व्युत्पाद्यते तद्भाषाग्रन्थव्याकर्त्तृभिर्यथा—एके 'प्राकृतजनानां भाषा प्राकृतम्' अन्ये—'प्रकृतिः संस्कृतं तद्विकृतिः प्राकृतम्' 'प्रकृष्टः अकृतः कार्य्यो यस्मिन् तत्प्राकृतम्' इति शब्दकल्पद्रुमः। प्राकृतसञ्जीवनीकारः—'प्राकृतस्य तु सर्व्वमेव संस्कृतं योनिः' प्राकृतचन्द्रिकाकारः—'प्रकृतिः संस्कृतं तत्र भवत्वात् प्राकृतं स्मृतम्' इति। हेमचन्द्रः—प्रकृतिः संस्कृ तत्र भवं वा प्राकृतम्'। 'प्रकृत्या स्वभावेन सिद्धमिति प्राकृतम्'। इति सप्तधा प्राकृतशब्दस्य व्युत्पत्तिरस्माभिरुपलभ्यते पर्य्यालोचितेषु तेषु प्राकृतग्रन्थेषु। एषु च शेषोक्ता व्युत्पत्तिः वाक्पतिकवेरनुकूला।

हंहो सामाजिकाः, अयि काव्यरसरसिकाः!! दृश्यते समवगम्यते च तावत् पर्य्यालोचितासु भाषासु वैदिके युगे यया भाषया लोकाः परस्परं स्वाभिप्रायं व्याकुर्व्वन्ति तामेवेदानीमार्य्यापभ्रंशाख्यया समादिशन्ति सन्तः। तस्मादेव प्राकृतापभ्रंशस्योत्पत्तिरजायतेति।

नाटकादिग्रन्थेषु यत्प्राकृ' प्रचलितमुपलभ्यते तच्च

सुसंस्कृतार्थं प्राकृतरूपम्। यदि प्राकृतविद्भिः संस्कृतमेव प्राकृतस्य प्रकृतिरिति व्युत्पाद्यते तत्र संस्कृतं प्रति निरवच्छिन्नां प्रीतिमन्तरेण नान्योहेतुरिति कोलब्रूक-प्रभृतिपण्डितानां मतम्। प्रमाणयन्ति हि ते यतः प्राकृतवाक्येषु अप्रचलिताः बहवः वैदिकप्रयोगाः बाहुल्ये-नास्माभिरुपलभ्यन्ते परं नैकोऽपि लौकिकसंस्कृतः शब्दः कुत्रापि नासाद्यते, नितरां लौकिकसंस्कृतात् प्राकृतस्योत्-पत्तिरित्यतिहेयं वचः।

नूनं दृश्यते वैदिकासु भाषासु प्रथमैकवचनप्रयोगे यथा ओकारस्य साहित्यं तथा प्राकृतेऽपि, यथा—

१। 'आपो अस्मान्मातरः शुन्धयन्तु' 'संवत्सरोऽजायत' 'जुषाणो अग्निराज्यस्य' 'ऐन्द्रः प्राणो अन्धि' 'अयं सो अध्वरः, ऋषीणां पुत्रो अधिराज एषः, हविष्मान् देवो अध्वरः' इत्यादि,—प्राकृते च देवो, वच्छो, भत्तारो, अप्पाणो सव्वो, जो, सो, इमो इत्यादि। यथा मृच्छकटिके— * * * तावदेव सो गह्णो * * *।

२। प्राकृतस्य द्विवचनस्थाने बहुवचनं सर्व्वत्र परि-लक्ष्यते। वैदिकभाषायान्तु तथा बहुल एव प्रथमायाः द्विवचने आकारान्तः प्रयोगः, यथा--'इन्द्रावरुणौ' इत्यत्र 'इन्द्रावरुणा' 'मित्रावरुणौ' इत्यत्र 'मित्रावरुणा' 'यौ सुरथौ रथितमौ दिविस्पृशावश्विनौ' अत्र 'या सुरथा

रथीतमा दिविस्पृशा अश्विना' इत्यादिप्रयोगस्थलगद्वि-
वचनान्ताकार एव बहुवचनान्तस्य ज्ञापक इति स्वीकार्य्यं,
तस्मादेव प्राकृतबहुवचनान्ताकारस्योत्पत्तिरासीदित्यनु-
मीयते भाषातत्त्वाभिज्ञैः विपश्चिद्भिर्बुधैः।

३। 'वैदिकवाक्येषु तृतीयाया बहुवचने—'पूर्व्वेभिः, देवेभिः गम्भीरेभिः, देवकर्म्मेभिः, सुतेभिः यज्ञेभिः' इत्यादि। प्राकृते भकारस्य स्थाने हकारं विन्यस्य—पुव्वेहिं, देवेहिं, गम्भीरेहिं देवकम्मेहिं, सुतेहिं जरोहिं इत्यादि। वेण्यां यथा राचसः—"* * * तच्च अस्येहिं लक्खणेहिं अणुप्पविशिअ पादव्वं त्ति।" कर्पूरमञ्ज-य्यांयाञ्च "* * * संकेअकालो कहिदो वंदोहिं।"

४। पञ्चम्येकवचने वैदिकभाषायां—'नीचा, उच्चा, पश्चा' इत्यादि। प्राकृते—'वच्चा, पच्छा, देवा, पुरुसा, सव्वा' इत्यादि।

५। 'चतुर्थ्यर्थे बहुलं छन्दसि' इति पाणिनीया-नुशासनात् चतुर्थ्यां षष्ठी। प्राकृतेऽपि 'सर्व्वत्र षष्ठी-वचतुर्थ्याः' इति क्रमदीश्वरसूत्रेण तथैवास्माभिरुपलभ्यते। यथा—'पुरुषमृगचन्द्रमसो गोधाकालका दार्व्वाघाटास्ते वनस्पतीनां कृकवाकुः सा चित्रोऽसौ वातस्य नाक्रोमकारः कुलीपयस्ते अकूपारस्य क्रियैशल्यकः।' मां २४।३६ इत्यादि। प्राकृते 'बम्भस देहि' 'अग्गिणो स्वाहा' 'देवस्स



प्राकृत—२

षम:' इत्यादि। मृच्छकटिके यथा—मम्वाहक:—"* * अहं ते देमि, अहं मे मच्चदु।" इति—

६। 'पश्चपश्चाच्छन्दसि' इति पाणिनिसूत्रात् 'पश्चात्' इत्यत्र 'पश्च' पश्चा 'युष्मान्' इत्नत्य युष्मा 'उच्चात्' इत्नत्य 'उच्चा' 'नीचात्' इत्यत्र 'नीचा' इत्यादि। 'अन्त्यस्य हल:' इति सूत्रेण सर्वत्र प्राकृतभाषायाः अन्त्यव्यञ्जनस्य लोपोऽस्माभिरुपलभ्यते। यथा—'सरस्तेजः सरोतेओ पश्चात् पच्छा सरुम्मरू। चन्द्रमा चन्दमो तद्वदिन्द्रजित् पुनरिन्दइ॥' इत्यादि।

७। वक्तुरिच्छाधीनैव वैदिके युगे सन्निहित-स्वरद्वयानां सन्धिरिष्टेति दृश्यते यथा—'शिरो अपश्य' पथिभि: सुगेभि:' 'पुसा अरिष्ट' 'सुजाते अश्वसूनृते कथं अयं सो अग्निर्यास्मिन् सोममिन्द्र:' 'तस्य भ्राता मध्यमो अन्तर स:' 'अध्वर्यो अद्रिभि: सुतम्' इत्यादि। प्राकृतेऽपि तथैव यथा—* * अज्जा अणुगेण्हदु। * * * सुणादु अज्जो, पढ़मं दाव अज्जस्स (मुद्रा)। वेणीसं—"वसागन्धे, एशे क्खु अग्गग्गत्यामि आकड्ढिदाग्गिवत्ते इदोज्जेव्व आअच्छदि।" इति।

"कमलइं मल्लवि अलिउलं करिगराडाइं महं ति।
असुलहं एत्थ ण जाहं भलि ते णावि दूरं भणंति॥"इति (चण्ड:)
कमलानि मुक्त्वा अलिकुलानि करिगण्डानि कांचन्ति।
असुलभमल न येषां भल्लेते नापि दूरं गणयन्ति॥ इति छाया।

८। 'ऋषो अनम्' 'ऋतु अनं' 'देवा अनं' 'गो अनम्' इत्यादि वैदिकशब्दे भूरि 'अनं' प्रयोगदर्शनात् प्राकृतस्य षष्ठ्याः बहुवचने णमिति षष्ठोचिह्नमुपपन्न-मित्यनुमीयतेऽनेकैरपि भाषातत्त्ववेदिभिः। यथा वेण्यां— "णाह, असुर-समराहिमुहस्स हरिणो विअ मङ्गलं तुम्हाणं होदु"। इति।

संस्कृता वाणी समासादिबाहुल्येनात्यतिगौरवमयी, प्राकृता भाषा च सरलातिमधुरा। संस्कृताभाषा बहु-व्यञ्जनवर्णान्विता, प्राकृता वाणी स्वरप्रचुरा। प्राकृता-पेक्षया संस्कृता वाणी कृच्छ्रोच्चारणीया, प्राकृताभाषा ऋजुभावप्रवणा।

संस्कृता भाषा व्याकरणाधीना, साहित्यभाषारूपिणी पण्डितजनसेव्या; प्राकृता भाषा सकलजनोच्चारणीया नवनवभावोन्मेषेण तत्तत्कालोद्भवव्याकरणपाशादुन्मुक्ता, मधुरप्रबन्धसन्ततिप्रचुरा तथाहि—

'नवमत्थदंसनं संनिवेस सिसिराओ बन्धऋडीओ
अविरलमिणमो आ-भुवन-बन्धमिह णवर पअअम्मि॥"
नवमर्थदर्शनं सन्निवेशशिशिराबन्धद्धयः।
अविरलमेतदाभुवनबन्धमिह केवलं प्राकृते॥

इति छाया।

अपरञ्च—

'हरिसविसेसो विअसवाओअ मउलाओअ अच्छोण।
इह बहिमुहत्तोअन्तोमुहोअ हिअअस्स निप्फुरइ॥"

हर्षविशेषो विकासको मुकुलीकारकश्चानयोः।
इह वहिर्मुखोऽन्तर्मुखश्च हृदयस्य विस्फुरति॥
इति छाया।

कविराजशेखरश्चाप्याह—
"परुसा सक्कि अबन्धा पाउदबन्धं वि होइ सुउमारो।
पुरिसमहिलाणं जेत्तिअमिहन्तरं तेत्ति अभिमाणं॥"
परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः।
पुरुषमहिलयोर्यावदिहान्तरं तावदनयोः॥
इति छाया।

संस्कृतप्राकृतयोर्मध्ये प्राकृतस्य सन्ति तावत् बहुल-प्रकारभेदाः। यथा केशवचन्द्रकृतप्राकृतचन्द्रिकायाम्—
"महाराष्ट्री तथावन्ती शौरसेन्यर्द्धमागधी।
वाह्लीकी मागधी चैव षड़् ता दाक्षिणात्यजाः॥
ब्राचण्डलाटवैदर्भावुपनागरनागरौ।
वार्व्वरावन्त्यपाञ्चालटाक्कमालवकैकयाः॥
गौड़ोड़ दैवपाश्चात्यपाण्ड्यकौन्तलसिंहलाः।
कालिङ्गप्राच्यकार्णाटकाञ्चद्राविड़गौर्ज्जराः॥
आभीरो मध्यदेशीयः सूक्ष्मभेदव्यवस्थितः।
सप्तविंशत्यपभ्रंशा वैड़ालादिप्रभेदतः।" इति।

दर्पणकारेण नाटकीयपात्राणां भाषाव्यवस्थापनोपक्रमे-णाधःस्थभाषायाः व्यवहार उल्लिखितः यथा—
पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्॥ इत्यादि

रूपकपरिभाषाकारेण च भाषास्वरूपं तस्या विनियोगप्रकारश्च विश्वनाथलिखितानुशासनात् किञ्चित्सङ्कल्य स्वग्रन्थे सन्निवेशितः। यथा हि—

"भाषा द्विधा संस्कृता च प्राकृता चेति भेदतः।
कौमारपाणिनीयादिसंस्कृता संस्कृता मता॥ इत्यादि।

अत्रोक्तयोर्द्विविधयोः संस्कृतप्राकृतयोः कौमाराद्यनुशासिता वाक् उत्तममध्यमपात्रेषु नियोजयितव्या। यथा रुक्मिणीहरणादौ—श्रीकृष्णप्रभृतीनाम्, उत्तररामचरिते—वनदेवतायाः। मुनीनां यथा—शाकुन्तलादिनाटके कण्वप्रभृतीनां, नायकानां—दुष्मन्तादीनां, विप्राणां मालविकाग्निमित्रे हरदत्तगणदासयोः; शाकुन्तले शार्ङ्गरवसारद्वतयोश्च। क्षत्राणां वेण्यां यथा—युधिष्ठिरदुर्य्योधनादीनाम्। वणिजां—मृच्छकटिकादौ चारुदत्तप्रभृतीनाम्। शूद्राणामुत्तररामचरितादौ शम्बूकादीनाम्। मन्त्रिणां—मालविकाग्निमित्रे अमात्यस्य, राज्ञः कञ्चुकिनः, इत्यादि सर्व्वत्र। लिङ्गिनां—मालविकाग्निमित्रे परिव्राजिकायाः, मालतीमाधवे बौद्धभिक्षुक्याः कामन्दक्याः कपालकुण्डलायाश्च। विटादीनां—मृच्छकटिके ज्ञातव्या। अनीचानां मध्यमपात्राणां सर्वेष्वेव नाटकेषु वर्त्तते कथा, बाहुल्यभयेन तासामवतारणं परिहृतम्।

अत्रोक्तायाः षड्विधप्राकृतभाषायाः किञ्चित् वैषम्यं परिलक्ष्यते प्राकृतवैयाकरणचण्डवाक्येषु यथा—

संस्कृतं प्राकृतं चैवापभ्रंशोऽथ पिशाचिका।
मागधी शौरसेनी च षड्भाषाश्च प्रकीर्त्तिताः॥" इति।

नूनमासु भाषासु अपभ्रंशाख्यातावत् निकृष्टजनोच्चारणीया 'न लोपोऽपभ्रंशेऽधोरेफस्य' इति चण्डानुशासनात् 'व्याघ्रो घसि जादि' (व्याघ्रो ग्रसित्वा याति) तुह मह केसे देहिसि (त्वं मे कदा दास्यसि) एमबाहि अम्हे ए ण्हां पच्छइ गच्छिमो (इदानीं वयम अस्य पश्चात् गमिष्यामः) हेलि, एम्मइ मइ तहिंए जा अव्वं, तम पुणु भत्तरो तोसिअव्व' (हे सखि, एवमेव मया तत्र यातव्यं त्वया पुनः भर्त्ता तोषितव्यः) इत्यादि।

मागधी खलु मगधानां भाषा। सा तु चेटादीनां यथा मृच्छकटिके शकारस्य। तस्यानुशासनं प्राकृतप्रकाशे 'चिट्ठ चिट्ठ' 'षसोः शः' इत्यादि, यथा—"* * * चिट्ठ वशन्तसेणिए चिट्ठ" इत्यादि। अभिज्ञानशकुन्तले—"ततः प्रविशति नागरिकः श्यालः पश्चात्बद्धपुरुषमादाय रक्षिणौ च। रक्षिणौ—(ताड़यित्वा) 'अले कुम्भिलआ, कधेहि कहिं तुए अेसे मणिबन्धणुक्किण्णणामहेअे लाअकीअे अङ्गुलीअअे समासादिअे।' पुरुषः (भीतिनाटितेन) 'पसीदन्तु पसीदन्तु भावमिस्से,

अंह्केण ओरिसकम्मकालो।' प्रथमः—'किस खु सोहणे बम्हणसि त्ति कलिअ रवा पलिग्गहे दिस्रे? पुरुषः—'सुणुह दाणिं, हगी सक्कावदालवभन्तलनासी धीवले। * * *' इत्यादि।

पैशाची पिशाचानां भाषा। सा च 'वर्गाणां तृतीयचतुर्थयोरस्तु जौरणाद्योराद्यौ' 'णोनः' इत्याद्यनुशासनैरनुशासिता यथा कुमारपालचरिते—

"सुद्दा कसाय हितपक जितकरन कुटुम्बचेटो योगो।
सुक्ककुटुम्बसिनेहो न वलति गन्तून सुक्खपतं।"
शुद्धाकषाय हृदयजितकरणकुटुम्बचेष्टो योगी।
मुक्तकुटुम्बस्नेहो न वलते गत्वा मोक्षपदम्।
पजजानराचिना गुननिधिना रञ्ञा अनञ्ञपुञ्ञेन।
चिन्तेतव्वं मतनातिवेरिनो किर विजेतव्वा॥
प्रजानां राज्ञा गुणनिधिना राज्ञा अनन्यपुण्येन।
चिन्तयितव्यं मदनादिवैरिणः किल विजेतव्याः॥
यन्ति कसाया नट्ठून यन्ति न ठून सव्व कम्माइं।
समसलिलसिनातानं उज्झितकतकपटभरियान॥
यान्ति कषाया नष्टा यान्ति नष्टा सर्वकर्माणि।
शमसलिलस्नातानामुज्झितकृतकपटभार्याणाम्॥
यति अरिह परममन्तो पठिज्यते कीरते न जीव वध।
यातिस तातिस जती ततो जनो निव्वुतिं याति॥
यदि अर्हत् परममन्त्रो पठ्यते क्रियते न जीववधः।
यादृश तादृश जातिस्ततो जनो निर्वृत्तिं याति॥

अच्छति रन्ने सेलेपि अच्छते दढ़तपं तपन्तोपि ।
ताप न लफेय्य मुक्कं याव न विसयानतूराती ॥
आस्तेऽरण्ये शैलेऽप्यास्ते दृढ़तपस्तप्यमानोऽपि ।
तावन्न लप्स्यते मोक्षं यावन्न विषयेभ्यो दूरात् ॥

पिशाचदेशस्तु लक्ष्मीधरेण षड्भाषाचन्द्रिकायामुक्तः, यथा—

"पाण्ड्यकेकयवाह्लीकसह्यनेपालकुन्तलाः ।
सुदेशभोटगान्धारहैवकन्नोजनास्तथा
एते पिशाचदेशाः स्युस्तद्देश्यस्तद्गुणो भवेत् ॥" इति ।

वररुचिना प्राकृतप्रकाशे 'महाराष्ट्री, मागधी, पैशाची, शौरसेनी'ति चतुर्विधभाषालक्षणं सन्निबद्धम् । तासु महाराष्ट्री एव प्रकृष्टा प्राकृता वाणीति मत्वा तासामनुशासनं प्रथमतो नवमपरिच्छेदान्तं सुसन्निवेशितम् । सत्साहित्यादिषु तस्याः प्रयोगबाहुल्यमेव हेतुरित्यवधारयामहे । यतो दण्डिनापि काव्यादर्शे तथैवोक्तम् । यथा—

"महाराष्ट्राश्रयां भाषां प्रकृष्टां प्राकृतीं विदुः ।"

सैव महाराष्ट्री कदा कस्मिन् देशे प्रचलितासीदित्यवलम्ब्य पण्डितानां मतभेदो महानेव संवृत्तः । प्रातीच्याध्यापकेन ज्याकोविनामधेयेन केनचित् विदुषा उच्यते यत्—'महाराष्ट्रस्य राजधान्याः प्रतिष्ठानमेवास्या व्यवहार आसीदिति । किन्तु होर्न्लिनामापरः कश्चि-

विद्वान् वर्त्तमानमहाराष्ट्रीभाषया समं महाराष्ट्रीप्राकृतभाषायाः सादृश्यं नावलोक्य कृत्स्ने आर्य्यावर्त्ते नूनमेषा भाषा शिष्टसमाजेषु प्रचलितासीदित्यनुमाति। अनया भाषया सेतुबन्धगौड़वधादीनि महाकाव्यानि रचितानि दृश्यन्ते।

शौरसेनी यथा—राजशेखरकृतकर्पूरमञ्जरीनाटिका। सा च आमूलान्ता एव शौरसेनीयभाषया निबद्धा यथा—

नायिका। अत्थि पत्थ विदब्भं णाम णअरं कुन्तलेसु। तहिं सअलजणवल्लहो वल्लहराओ णाम राआ।

देवी। जो मह माउसिआए पइ होइ।

नायिका। तस्स घरिणी ससिप्पहा णाम।

देवी। सावि मे माउसिआ।

नायिका। तहिं अहं उप्पस्से त्ति। इत्यादि।

"शूरसेनोद्भवा भाषा शौरसेनीति गीयते।" इति दण्डिवचनेन शूरसेनदेशीया भाषा एव शौरसेनीयेति सम्यक् प्रतीयते। तद्देशस्तावन्मथुरेति मनुवाक्येनास्माभिरुपलभ्यते। यथा—

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥ इति।

अत्र भङ्गः—मत्स्यादिशब्दाः बहुवचनान्ताः देश-

विशेषवाचकाः, पञ्चालाः कान्यकुब्जदेशाः, शूरसेनकाः मथुरादेशाः। एष ब्रह्मर्षिदेशः ब्रह्मावर्त्तात् किञ्चिदून इति। तत्रत्यदेशेषु इयमेव भाषा सर्व्वत्र प्रचलिता सोदिति पण्डिताः आमनन्ति। नाटकेषु उत्तमाङ्गनाना-मियमेव भाषा। यथा उत्तररामचरिते सीतायाः, शाकुन्तले शकुन्तलायाः। वेण्यां द्रौपद्याः, भानुमत्याश्च; मालविकाग्निमित्रे मालविकाधारिण्योः इत्यादि।

"मगधोत्पन्नभाषां तां मागधीं सम्प्रचक्षते।" इत्या-चार्य्यानुशासनात् मागधीया भाषा हि मागधी। सा च विहाराञ्चलवासिनां भाषा। तद्भाषातः वङ्गीयानां भाषा समुत्पन्नेति कैः कैरेव भाषातत्त्ववादिभिरनुमोद्यते। वयं तत्रोदासीनाः, त एव तत्र प्रकृष्टप्रमाणम्।

पैशाची नूनमनार्य्याणां मुखोच्चारितप्राकृतभाषातो-विकृता। सा स्थानविशेषाणां निर्द्दिष्टा भाषा नेति केषाञ्चिन्मतम्। तत्तु "पिशाचदेशनियतं पैशाचीद्वितयं भवेत्।" इत्यादि लक्ष्मीधरधृतपूर्व्वोक्तवाक्ये पिशाच-देशनिर्द्देशात् तद्धेयम्। तत् वाक्यस्थपाण्ड्यदेशो हि भारतभूमेरत्यतिदक्षिणसमुद्रतीरवर्त्तिराज्यविशेषः। वर्त्त-मानमादुरा कुमारी च तद्भूमेरन्तर्गतेति प्रमाणैः प्रमाणी कृतं केनापि विदुषा। केकयः कैकेय्याः पितृदेशः। स च पञ्चनदान्तर्गतः। वाह्लीकः गान्धारदेशस्य प्रतीच्यामाफ-

गानिस्थानस्यान्तर्गतदेशविशेषः। वर्त्तमानवाल्खनगरमस्यान्तर्गतम्। सह्यः दक्षिणभारतस्य पश्चिमोपकूलम्। वर्त्तमानकोल्हापुरं, गोयो च तस्यान्तर्भूतदेशः। नेपालः अयोध्यायाः त्रिहुतस्य च उत्तरस्थपार्व्वत्यप्रदेशः। कुण्डलः नर्म्मदायाः उत्पत्तिस्थानम्। विदर्भनगरी यस्य राजधानी। सुदेष्णः कश्चिदरण्योपकण्ठप्रदेशः। भोटः कामरूपस्य (वर्त्तमानासामप्रदेशस्य) उत्तरवर्त्तिपार्व्वत्यदेशः। गान्धारः सिन्धुनदस्य पश्चिमे काबुलपेशोवारदेशौ। हैमः हिमालयपादस्थपार्व्वत्यदेशविशेषः। वर्त्तमाननेपालभोटानयोः गहनारण्यवासी कश्चित्सम्प्रदायः हयुनाम्ना प्रसिद्धोऽस्ति, तस्य एव भाषा हैव इति केऽपि मन्यन्ते। कन्नोजनः दक्षिणमहाराष्ट्रदेशे कुजननाम्ना वर्त्तते कश्चित् सम्प्रदायः। तस्य पुरा म्लेच्छाचार एव आसीत्; इदानीं सनातनधर्म्ममाश्रित्य देवं देवीञ्च अर्च्चयित्वा आर्य्यनाम्नाभिधीयते। तेषामधिकृता भूरेव कन्नोजनस्थानमिति मन्यते अनेकैरेव पण्डितैरिति सङ्क्षेपतः आधुनिकभाषाविवृतिः।

नूनमियमेव प्राकृताभाषा तत्समतद्भवतद्देश्येति त्रिधा विभज्यते पूर्व्वतनैर्विपश्चिन्मुख्यैः। यथाहि—

"त्रिविधा प्राकृती भाषा भवेद्देश्या च तत्समा।
तद्भवा च भवेद्देश्या तत्र लक्षणमन्तरा॥
तत्समा संस्कृतसमा नेया संस्कृतवर्त्मना।

तद्भवा संस्कृतभवा सिद्धा साध्येति सा द्विधा ।
द्विविधायाश्च सिद्धयर्थं प्राकृतं लक्षणं मतम् ॥" इति ।

संस्कृतेन समं येषां शब्दानां वर्णघटितप्रभेदो न जायते न हि तत्समाख्यायेन निर्दिश्यते यथा हि तेऽनुलोम-वर्णमालिकया—अङ्क, अङ्कुर, अङ्ग, अञ्चल, अन्त, अवसर, अवला, अलक, असुर, आगम, आभरण, आमूल, इच्छा, इन्दु, उच्च, काल, कारण, कुञ्जर, कुञ्ज, कुण्डल, कुन्तल, कूल, खण्ड, खुर, गङ्गा, गन्ध, गम्भीर, गुण, गुहा, घण्टा, चञ्चल, चञ्चु, चारु, चिर, छल, छवि, जङ्घा, जन्तु, जम्बु, जल, झङ्कार, टङ्क, तन्तु, तमाल, तरु, तल, तारा, ताल, तालु, तिमिर, तीर, तुरङ्ग, तोरण, दण्ड, दन्त, दल, दव, दार, दारु, दारुण, दाह, दूर, देव, दोला, धरा, धवल, धारा, धीर, धूम, पञ्जर, पट्ट, पर, परम्परा, परिमल, परिहार, पामर, पिच्छ, पिच्छल, पिञ्जर, पुङ्गव, पुञ्ज, पुरा, फणी, फल, फुल्ल, बन्ध, बन्धु, बहु, बाल, बाला, बाहु, बिन्दु, बीर, भङ्ग, भव, भार, भित्ति, मरण, मराल, मरु, महागिरि, महो माला, मुण्ड, रङ्ग, रमण, रवि, वेणु, लज्जा, लवण, वल्लरी, विमल, विरल, विलास सङ्कुल, सजल, सञ्चार, सलिल, सार, सिन्धु, सुन्दर, सुर, हुङ्कार, हेय, इत्यादि ।

संस्कृततो ये तावत् शब्दोद्भवा स्ते हि तद्भवाख्या

यथा—अक्क ( अर्क ) अग्ग ( अग्र ) अग्गि ( अग्नि ) अज्ज ( अद्य ) तस्स ( अन्य, अज्ञ ) अहिल (अखिल) आहुइ (आहुति) इट्ठ ( इष्ट ) इन्द ( इन्द्र ) इसा ( ईर्षा ) उग्गम ( उद्गम ) उप्पल ( उत्पल ) उस्सुअ ( उत्सुक ) ओट्ठ ( ओष्ठ ) कज्ज ( कार्य्य ) कप्पूर ( कर्पूर ) कण्ण ( कर्ण ) कोत्थुह ( कौस्तुभ ) खज्जुर ( खर्ज्जुर ) गब्भ ( गर्भ ) गव्व ( गर्व्व ) चक्क ( चक्र ) चन्द ( चन्द्र ) छत्त ( छत्र ) छोह ( चोभ ) जक्ख ( यक्ष ) जोग्ग ( योग्य ) झाण ( ध्यान ) णाह ( नाथ ) निद्दा ( निद्रा ) ण्हाण ( स्नान ) तह ( तथा ) तिअस ( त्रिदश ) दब्भ ( दर्भ ) दप्पण ( दर्पण ) दारिद्द (दारिद्र) दिट्टि (दृष्टि) दिव्व ( दिव्य ) दुव्वल ( दुर्व्वल ) धम्म ( धर्म्म ) धव ( ध्रुव ) पच्छा ( पश्चात् ) पच्छिम ( पश्चिम ) पड़िमा ( प्रतिमा ) पत्थणा ( प्रार्थना ) पहु ( प्रभु ) फंस (स्पर्श) बहू ( वधू ) बोर ( वदर ) भत्त ( भक्त ) भूइ ( भूति ) मइन्द ( मृगेन्द्र ) मग्ग ( मार्ग ) मज्झ ( मध्य ) महु ( मधु ) मेह ( मेघ ) रण्ण ( अरण्य ) रुहिर ( रुधिर ) लहु ( लघु ) सल्ल ( शल्य ) सही ( सखी ) साहा (शाखा) सीह ( सिंह ) हिअय ( हृदय ) इत्यादि ।

येषां शब्दानां संस्कृतेन समं न कथं कथमपि सुसादृश्यो वर्त्तते, एवमपि च साधारणजनानां यैव

मनोभावविकाशिनी सा हि देशी यथा—अत्यक्क् (अनवरत) आलुङ्खन ( स्पर्श ) उअह ( पश्यत ) उव्वाअ ( शुष्क ) ओहुर ( अवाङ्मुख ) कसव्व ( कर्कश ) खुओ (निमग्न) खुप्पइ ( निमज्जति ) चङ्ग ( सुन्दर ) चक्खइ ( आस्वादयति ) चुडुप्प ( चत ) छज्जन्ति ( दीप्यन्ते ) छिवइ ( स्पृशति ) झसुर ( ताम्बुल ) झिल्ली ( लहरी ) टिविडिक्कि्अ (प्रसाधित) णिव्वाम (मन्द) णिम्महइ (गच्छति) णुमेइ ( आच्छादयति ) तम्माअ (आर्द्र) दूमेइ (परितापे) पिअइ ( पश्यत ) पव्वार ( संहति ) पलही ( कार्पास ) पल्लोट्ट ( पर्य्यस्त ) पारत्तो ( पत्रिका ) पारी (दोहनपात्रविशेष) पुसइ ( शुद्धयति ) फुसन्ति ( शुद्धौ ) पेहुन ( पक्ष ) मङ्गुल ( पाप ) मड्डह ( अल्प ) विच्छड्ड (समूह) विडप्प ( राहु ) विढत्त ( अर्जित ) सअराहा ( शीघ्र ) छीर ( प्रान्त ) हुत्त ( अभिमुख ) हेट्ठ ( अधःस्थित ) इत्यादि ।

नूनं दृश्यते हि पञ्चाशद्वर्णमालिकयैव संस्कृतशब्दानां सिद्धिः, किन्तु प्राकृतशब्दानां केवलं चत्वारिंशदक्षरैः तदर्थोपपत्तिः । यदाह लक्ष्मीधरः षड्भाषाचन्द्रिकायां—

सिद्धिः संस्कृतशब्दानां भवेत् पञ्चाशदक्षरैः ।
प्राकृतानान्तु सिद्धिः स्यात्तैश्चत्वारिंशदक्षरैः ॥
ऋ लृ वर्णौ विनैकारौकाराभ्यां च दश स्वराः ।
शषावसंयुक्तङञौ विने चान्ये हलोमताः ॥

( नयोः स्थाने णञौ स्यातां ङञौ वर्गयुजौ क्वचित् ।
क्वचिद्धाऽन्ययुक्तायोऽन्यवर्गीयैर्युजोऽत्र न ॥
त्क, प्क, त्त, क्य, क्र, क्क, क्व, ल्क, इत्येतेषां क्क इत्ययम् ।
ग्न, ग्र, ग्ल, ग्य, ग्र, र्ग णगानां ग्ग, इत्यादिश्च दृश्यते ॥ )
प्राकृते न द्विवचनं सुप्तिङां चोपपद्यते ।
यस्माद्द्विवचनस्थाने बहुत्वं सूत्रचोदितम् ॥
हलन्तता नान्त्यहलां सूत्रैर्लोपादिशासनात् ।
लिङ्गानां वैपरीत्यञ्च संस्कृतात् प्राकृते भवेत् ॥
द्वितीयादिविभक्तीनां स्थाने षष्ठी क्वचिद्भवेत् ।
चतुर्थ्या अपि षष्ठी स्यात् नित्यमेकबहुत्वयोः ॥
तादर्थ्ये तु चतुर्थ्याः स्यादेकत्वे सा विकल्पिता ।
वधात् परस्य ङे स्थाने षष्ठी ङायि च वा भवेत् ॥
द्वितीया सप्तमीस्थाने क्वचित् सूत्रचोदिता ।
नियमो नात्मनेभाषा परस्मैपदिनोरिह ॥
शत्रादिप्रत्ययानान्तु प्रयोगो नात्र सम्मतः ।
एतत् सर्व्वं बहून् ग्रन्थान् सूत्रानालोच्य निश्चितम् ॥

इति ।

प्रत्युत भाषेषा नानाविधया दिशा सर्व्वथा समाकर्षति सहृदयानां चेतोऽति मात्रम् । दृश्यन्ते तावदत्र महा-काव्यम्, खण्डकाव्यम्, छन्दः, कोषः, भूगोलः, ज्योतिःशास्त्रं गणितः चिकित्सा, जीवनी, नाटकादि-बहवो ग्रन्थाः ।

तेन मन्ये पुरा संस्कृतवदस्या अप्यनुशीलन-मासीत् । नाटकादौ यथा सुरभाषायाः समादरस्तथा तथा प्राकृतभाषायाश्च ; नितरां वक्त सुपयुज्यते संस्कृत-स्यापरा दिक प्राकृता वाचोति किं वा कप्रपञ्चेन ।

## নিবেদন —

প্রাকৃতভাষা সংস্কৃতভাষার অপরাংশ বলিলে অত্যুক্তি হয় না ; ইহা সংস্কৃতকাব্য নাটকাদি পাঠার্থী মাত্রেই জ্ঞাত আছেন। ইহার সম্বন্ধে অনেক কথা আমরা প্রাকৃতলক্ষণের মুখবন্ধে বলিয়াছি। সংক্ষেপতঃ এই ভাষায় সুপাঠ্য বহু গ্রন্থই দেখিতে পাওয়া যায়। কিন্তু দুঃখের বিষয় এই গ্রন্থের বহুল প্রচারের অভাবে ক্রমে বহুগ্রন্থই লুপ্তপ্রায় হইয়া আসিতেছে, তাই আমরা প্রাকৃতের একটী সিরিজ বাহির করিবার মনন করিয়া প্রথম এই প্রাকৃত-লক্ষণ বাহির করিলাম। আমাদের এই সিরিজের যিনি গ্রাহক থাকিবেন, তাঁহাকে অগ্রিম টাকা দিয়া সাহায্য করিতে হইবে না ; কেবলমাত্র পত্র লিখিয়া গ্রাহক শ্রেণীভুক্ত হইতে হইবে। পরে ক্রমশঃ যে সকল পুস্তক মুদ্রিত হইবে তাহার নির্দ্দিষ্ট মূল্য হইতে সেই গ্রাহকদিগের নিকট হইতে চারি আনা ( অর্থাৎ চারিভাগের এক ভাগ ) মূল্য বাদ দিয়া ভি, পিতে গ্রহণ করা হইবে।

প্রাকৃত সিরিজ সম্পাদক
শ্রীরেবতীকান্ত ভট্টাচার্য্য
সংস্কৃত পুস্তকালয়, ৫৮ কর্ণওয়ালিস ষ্ট্রীট্, কলিকাতা।

# निवेदन—

प्राकृतभाषा संस्कृत भाषाका दूसरा अंश है; यह बढ़ा बढ़ाकर कहना नहीं है, इस बातको संस्कृत काव्य नाटक आदिकोंके पढ़नेवाले सभी अच्छीतरह जानते हैं। इसके सम्बन्धमें कई बातें मैंने प्राकृत लक्षणके मुखबन्धमें कही हैं। प्राय इस भाषामें उत्तम और पढ़ने योग्य सभी ग्रन्थ देखनेमें आते हैं; पर दुःखका विषय यही है कि, ग्रन्थका अधिक प्रचार न होनेसे धीरे धीरे बहुत ही ग्रन्थ प्रायः लुप्त हो गये है। मैंने प्राकृतका एक "**सिरिज**" बाहर करना विचारकर पहले मैंने "**प्राकृत लक्षण**" प्रकाशित किया है। मेरे इस सिरिजके जो ग्राहक होंगे उनको पहले रुपयाकी सहायता नहीं देनी होगी, केवल पत्र ही लिखकर ग्राहक श्रेणीमें भर्त्ति होना पड़ेगा। येही क्रमसे जो सब प्राकृत ग्रन्थ छपेंगे तब उनके निश्चित मूल्यसे चार आने (अर्थात् चौथाई) कमती मूल्यपर भी, पी, द्वारा लेने पड़ेंगे।

प्राकृत सिरिज सम्पादक

**श्रीरेवतीकान्त भट्टाचार्य्य**

संस्कृत पुस्तकालय, ५८ नं॰ कर्णवालिस ष्ट्रीट, कलकत्ता।

# अकारादिवर्णमालानुक्रमेण सूत्राणां सूची

—::o::—

## द



## न



## व

---

# प्राकृतलक्षणम्

ॐ नमः सिद्धेभ्यः ।

प्रणम्य शिरसा वीरं स्वल्पैर्व्यापिभिरक्षरैः ।
लक्षणं प्राकृतं वक्ष्ये किञ्चिद्वृद्धमतादहम् ॥क
क्वचिल्लोपः क्वचित्सन्धिः क्वचिद्वर्णविपर्य्ययः ।
आगमोऽन्तादिमध्येषु लक्ष्यं स्यात् तत्तुभाषितम् ॥

सिद्धं प्राकृतं त्रिधा ॥ १ ॥

सिद्धं प्रसिद्धं प्राकृतं त्रिधा त्रिप्रकारं भवति । संस्कृतयोनि ; तच्चेदं,—यक्षः जक्खो मात्रा मत्ता, नित्यं निच्चं, इत्यादि । संस्कृतसमं ; तच्चेदं,—सूरो, सोमो

---

(क) अहं शिरसा वीरं जिनं देवताविशेषमित्यर्थः । प्रणम्य वृद्धमतात् पूर्व्वाचार्य्याभिप्रायतः स्वल्पैर्व्यापिभिर्व्यापनशीलैरित्यर्थः, अक्षरैः, किञ्चित् प्राकृतं प्रकृतिः संस्कृतं तत्र भवः ततः आगतं वा प्राकृतम् । "संस्कृतं स्वर्गिणां भाषा शब्दशास्त्रेषु निश्चिता । प्राकृतं तज्जं तत्तुल्यं देश्यादिकमनेकधा ॥" इति । लक्षणं सूत्रं वक्ष्ये ।

१ । संस्कृताद्योनिर्य्यस्य तदिति क्लीवत्विकम् । यक्षः यजनं "यक्ष जः" इति यक्षः । ततो यथाविहितं विधाय [illegible]

जालं, कन्दलं, कोमलं, इत्यादि। देशीप्रसिद्धं ; तद्येदं,—हषितं लहसिअं, स्पष्टं चन्द्रिकोज्ज्वलितं पुट्टं, चन्द्रिकोज्ज्वलोय इत्यादि।

## लिङ्गञ्च ॥२॥

प्राकृते लिङ्गमपि त्रिधा त्रिप्रकारं भवति। देवो गङ्गा, कुलं।

## तस्मात् संस्कृतवद्विभक्तयः ॥३॥

तस्माल्लिङ्गात् पराः संस्कृतवद्विभक्तयोभवन्ति। सि,—देवो अग्गो रिपु, बुद्धि, धेनु, नई, वहू, पीठं, दहि, महु त्वं अहं। जस्—देवा, कुलानि, वयं, तुम्हे, अम्हे। अम्-देवं, अग्गिं, गुरु गङ्गां बुद्धिं, धेनुं,

---

वा" इति जजः। "हजयानां रणखा" इति जनः। "लोपे द्वित्वम्" इरि जन्नः। "एदोद्गलोपा विसर्ज्जनीयस्य" इति जन्नओ। "स्वराणां स्वरे प्रकृतिलोपसन्धयः" इति अकारस्य लोपे जन्नो। मात्रा कालविशेषः, चक्षुस्पन्दनप्रमाणकः कालः संस्कृतसमम् संस्कृतेन समम्। सूरो सूर्यः। सोमो चन्द्रः। जालं पाशः। कन्दलं कलहः कोमलं चारु।

२। देवो अत्र "एदोद्गलोपा विसर्ज्जनीयस्य" इति देवओ। "स्वराणां स्वरे प्रकृतिलोपः सन्धयः" इति देवो। अग्गी अत्र "शाङ्ग पञ्चमी वा" इति अग्गिः। ततो "लोपे द्वित्वम्" इति अग्गिः।

नईं, पीढ़ं, दहिं, महुं, त्वां, मां तां, रक्खतु। जस्—गङ्गा, तुम्हे रक्खउ। रक्खउ- वो वः। अम्हे रक्खउ। रक्खउ नो नः। टा—देवेण, गुरुणा, दहिणा,। भिस्—अग्गिहिं, रिपुहिं, बुद्धिहिं, नईहिं, दहिहिं, महुहिं, तुम्हेहिं, अम्हेहिं। ङसि—तस्मा तिस्मा। भ्यस्-- ग्रामेभ्यः गामाहिंतो, गुरुभ्यः गुरूहिंतो, धेणुहिंतो, नईहिंतो, दोहिंतो, वेहिंतो, तोहिंतो। ङस्—पुत्तो ते, पुत्तो मे, तव सुहं, मम सुहं। आम्—देवाणं, बुद्धीणं, धेनूणं, नईणं तेसं तेसिं। ङि—गामे, कुले, तत्र तत्थ, तस्सिं तम्हि. त्वयि तयि, मयि। सुप्—देवेसु, अग्गिसु, बुद्धिसु, मालासु, नईसु, कुलेसु, तुम्हेसु, अम्हेसु, इत्यादि।

---

"स्वरोऽन्योऽन्यस्य" इति अग्नीः "एदोद्रलोपा विसर्ज्जनीयस्य" इति अग्नी। बहू वधूः अत्र "हो खघथभानां" इति धस्य स्थाने हकारः। गगं गङ्गा "स्वरोऽन्योऽन्यस्य" इति गगं। तुम्भेहिं युष्माभिः—"युष्मदो यस्य तः" इति तुष्माभिः। "रशषाणां सः" इति तुस्माभिः। "वर्गे" इति तुमाभिः। "शहयोरलोपे नणमानामधो होऽपवादौ स्थितानां" इति तुम्हाभिः। "स्वरोऽन्योऽन्यस्य" इति तुम्हेभिः। "अदागमोऽनुस्वारलोपौ च व्यञ्जनस्य" इति तुम्हेभिं। "हिं-भिसः" इति तुम्हेहिं। तेसिं तेषां—"रशषाणां सः" इति तेसां। "स्वरोऽन्योऽन्यस्य" इत्यनेन "साम्" स्थाने सिं।

## क्वचिद्व्यत्ययः ॥४॥

एषां लिङ्गानां क्वचिद्व्यत्ययोभवति। जस्— विज्जुणो। देवाणि रक्खंतु।

## सागमस्याप्यामो णो हो वा ॥५॥

सागमस्यामोऽनागमस्यापि णकारो भवति हो वा। ताणं ताहं। देवाणं देवाहं। कम्माणं कम्माहं। सरिताणं सरिताहं। तुम्हाणं तुम्हाहं।

## संख्यायाः ण्हः ॥६॥

संख्यायाः परस्य सागमस्यानागमस्याप्यामो ण्हो भवति। पञ्चण्हं, तीसण्हं, इत्यादि।

---

४। क्वचिदिति। क्वचित् कुत्रचित् स्थले लिङ्गानां व्यत्ययो विपर्ययो भवति। विज्जुणो विद्युत् अत्र "अदागमोऽनुस्वारलोपौ च व्यञ्जनस्य" इति विद्यु। "वर्गादवर्ग्यस्" इति विदु। "तवर्गस्य चवर्गौ" इति विज। "लोपे द्वित्वं" इति विज्ज। "णोङसश्च" इति विज्जणो।

५। ताणं ताहं तेषामित्यर्थः। देवाणमिति आदावेव सर्व्वेषां शब्दानां "आण" करणीयम्। एकत्र णः अन्यत्र विकल्पेन हो इति कर्त्तव्यम्। देवाणमित्यादौ यथाक्रमेण—देवानां, कर्म्मणां, सरितां युष्माकमिति ज्ञेयम्।

६। पञ्चण्हं पञ्चानां। अत्र "अदागमोऽनुस्वारलोपौ च



व्यञ्जनस्य" इति पंच। "संख्यायाण्हः" इति पंचण्ह। "अनुस्वारो

## टा णः ॥७॥

लिङ्गात् परष्टा इत्यस्य ण आदेशोभवति। देवेण, गुरुणा, महुणा, दहिणा, सिरेण, इत्यादि।

## हिं भिसः ॥८॥

लिङ्गात् परस्य भिसो हिं भवति। देवेहिं गामेहिं।

## हिंतो भ्यसः ॥९॥

लिङ्गात् परस्य भ्यसो हिंतो भवति। गामेहिंतो सिद्धेहिंतो बुद्धिहिंतो धेनुहिंतो नईहिंतो तुम्हेहिंतो अम्हेहिंतो।

## तृतीयादीनामेत्वमेकत्वे स्त्रियाम् ॥१०॥

तृतीयादीनां टा-ङसि-ङस्-ङि-वचनानां स्त्रियां ए भवति। गङ्गाए बुद्धीए नईए वहूए तीए ताए।

---

बहुलं" इति पञ्चण्ह। तीसण्हं त्रिंशतां, त्रिंशत्—'रेफः पूर्वस्य" इति त्रिंशत्। "अनुस्वारोबहुलं" इति त्रिशत्। "स्वरोऽन्योऽन्यस्य" इति तीशत्। 'रशषाणां सः" इति तीसत्। "तस्य च" इति तलोपः तीस। "संख्यायाण्हः' इति तीसण्ह। "अनुस्वारो बहुलं" इति तीसण्हं।

८। देवेहिं देवैः गामेहिं ग्रामैः।

१०। गङ्गाए गङ्गया, गङ्गायाः गङ्गायाम्। तीए ताए तया तस्याः तस्याः तस्यामिति।

## ओउल्लोपा जस्शसोः ॥११॥

स्त्रियां वर्त्तमानयोर्ज्जस्शसोरोउल्लोपाश्च भवन्ति। मालाओ मालाउ माला। बुद्धीओ बुद्धीउ बुद्धी। धेनूओ धेनूउ धेनू। नईओ नईउ नई। एवं शसोऽपि।

## द्वित्रिशब्दाभ्यां जस्शसोर्णिः ॥१२॥

द्वित्रिशब्दात् जस्शसोर्णिर्भवति। दुण्णि विण्णि दुवे दो वे। तिण्णि। एवं शसोऽपि।

## पुंसि पूर्व्वत्वम् ॥१३॥

पुंसि पुंलिङ्गे वर्त्तमानयोर्ज्जस्शसोः पूर्व्वस्वरो भवति। अग्गी गुरू।

## क्लीवे जस्शसोः इं ॥१४॥

क्लीवे वर्त्तमानान् नाम्नः परयोर्जस्शसोः इं इत्यादेशोभवति।

कमलइं मल्लवि अलिउलइं करिगंडाइं महंति।
असुलहं एत्थ ण जाहं भलि ते णवि दूरं गणंति॥

---

१२। पूर्व्वस्वर इति यादृशः पूर्व्वपदस्य स्वरस्तादृश एव करणीय इत्यर्थः।

१४। कमलानि मुक्त्वा अलिकुलानि करिगण्डानि काङ्क्षन्ति। असुलभमल न येषां भक्ते तेनापि दूरं गमयन्ति॥ इति च्छाया। असुलहं असुलभं दुर्लभं वा। कदाग्रहो भवति। भलि हठात्कारेणेत्यर्थः।

## णो ङसिश्च ॥१५॥

पुंलिङ्गे वर्त्तमानयोर्जस्शसोर्णोभवति । पञ्च-म्येकवचनस्य च । अग्गिणो जलंति । मुणिणो पस्स । गिरिणो एति नई ।

## स्सश्च ङसः ॥१६॥

पुंसि वर्त्तमानस्य ङसो णो भवति । स्सश्च भवति । मुणिणो रूपं, मुणिस्स रूपं । अग्गिणो सिहा, अग्गिस्स सिहा । देवस्स सोहा । चकारग्रहणात् किं ? अका-रात् परस्य ङसो द्वित्वसकार एव भवति न तु णो ।

## ए म्मि ङः ॥१७॥

पुंसि ङिवचनस्य ए भवति । म्मि च भवति । अग्गिम्मि गुरुम्मि गामे गामम्मि ।

## ए शसोऽतः ॥१८॥

अतोऽकारादुत्तरस्य शसः पुंलिङ्गे ए भवति । देवे, बंभणे । देवान् ब्राह्मणान् ।

---

१५ । अग्गिणो अग्नयः ज्वलन्ति । मुणिणो मुनीन् पश्य । गिरिणो गिरितः एति नदी । मुणिणो मुनेः रूपं । अग्गिणो अग्नेः शिखा । देवस्स देवस्य शोभा ।

## तोतुहिंतोलोपास्तस्यातः ॥१९॥

पञ्चम्यातः आदेशतकारस्य तो-तु हिंतो-लोपा एते आदेशा भवन्ति। गयणातो गयणातु गयणाहिंतो गयणा।

## तदिदमोः से षष्ठीरूपाणाम् ॥२०॥

तद् इदम् अनयोरेकत्वद्वित्वबहुत्वेषु स्त्रीपुंनपुंसकेषु यद्रूपं तस्य से भवति। तस्याः रूपं से रूपं। तस्याः गुणाः से गुणाः। अस्याः रूपं से रूपं। अस्याः गुणाः से गुणाः। एवं शेषेष्वपि द्रष्टव्याः।

## युष्मदः ॥२१॥

अत ऊर्ध्वं युष्मदध्यायो भवति।

## तुमं सौ सविभक्तेः ॥२२॥

युष्मच्छब्दस्य सविभक्तेः सौ परतः तुमं आदेशो भवति। तुमं देवो।

## अमि तुए च ॥२३॥

युष्मदोऽमिपरे तुमं भवति, तुए च सविभक्तेः। तुमं भणामि। तुए भणामि।

---

१९। गयणातो गगनात् 'कगटतीययोः खरे' इति गस्य लोपः गअण। 'यत्वं अवर्णे' इति गयण। 'तवर्गस्य चवर्गौ' इति गयण। 'स्वरोऽन्त्योऽन्यस्य' इति गयणा।

२३। भणामीति संस्कृतसमं।

## तुम्भे जसि ॥२४॥

युष्मदो जसि परे तुम्भे भवति सविभक्तेः । तुम्भे मनुस्सा सूरा ।

## तुब्भे शसि ॥२५॥

युष्मदः शसि परे तुब्भे भवति, सविभक्तेः । तुब्भे मनुस्से भणामि ।

## ते तुमे तइ तए टायाम् ॥२६॥

युष्मदः टावचने परे ते तुमे तइ तए एते आदेशा भवन्ति, सविभक्तेः । किं ते कतं । तुमे दिट्ठो । तइ मज्झं कतं । तए पल्लातं ।

---

२४ । मनुस्सा अत्र "स्वरोऽन्योऽन्यस्य" इति मानुष्य "तवर्गस्य चवर्गौ" इति मानुष्य । "रशषाणां सः" इति मानुस्य । "शवसेभ्यो व्यञ्जनं" इति मानुस । 'लोपे द्वित्वम्" इति मानुस्स । "पुंसि पूर्ववत्वम्" इति मानुस्सअ । "स्वराणां स्वरे प्रकृतिलोपः सन्धयः" इति मानुस्सा ।

२६ । दिट्ठो दृष्ट इत्यर्थः, "स्वरारिव ऋवर्णस्य" इत्यनेन "दृ" इत्यस्य "दि" भवति । "वर्गे" इति षकारस्य लोपः, दिट । "लोपे-द्वित्वं" इति दिट्टः । तस्मिन् "द्वितीयचतुर्थयोः प्रथमतृतीयौ" इति दिट्ठः । "एदोद्लोपाविसर्ज्जनीयस्य" इति दिट्ठो । "स्वराणां स्वरे प्रकृतिलोपः सन्धयः" इति दिट्ठो । तव मज्झमिति त्वया मध्यं कृतम् । पल्लातमिति प्रख्यातम् ।

## तुमाहिं तुमाहिंतो तुमातो तइत्तो पञ्चम्याम् ॥२७॥

युष्मदः पञ्चम्येकवचने परे तुमाहिं तुमाहिंतो तुमातो तइत्तो एते आदेशा भवन्ति ; सविभक्तेः। तुमाहिं अहं सूरो। तुमाहिंतो अहं सुहओ। तुमातो अहं नाणी। तइत्तो निक्खन्तो। तुम्हेहिंतो अम्हे धिट्ठा, युष्मद् वयं धृष्टाः।

## तुह तुज्झ तुम्ह षष्ठ्याम् ॥२८॥

युष्मदः षष्ठ्येकवचने परे तुह तुज्झ तुम्ह एते आदेशा भवन्ति, सविभक्तेः। तुह सीलं। तुज्झ कलाओ। तुम्ह गुणा।

## तुम्हमामि ॥२९॥

युष्मदः आमि परे तुम्हमादेशो भवति, सविभक्तेः। तुम्हं चिय ते गुणा। युष्माकमेव ते गुणाः।

---

२७। तुमातो अहं नाणीति त्वदहं ज्ञानो। ज्ञानीति वर्ण विश्लेषे कृते "जञ" इति। ततः "शाङ्क पञ्चमो वा" इति ञकारस्य लोपः, इति जानी। "ह्रनथानां रनखाः" इति नानी। "तवर्गस्य चवर्गौ" इति नाणी।



२८। तुहसीलमित्यादौ तवशीलं, तव कला, तव गुणाः।

## तइ ङौ ॥३०॥

सविभक्तेः । तइ । तुम्हम्मि । तुम्हेसु ।

## अस्मदः ॥३१॥

अत ऊर्ध्वमस्मदध्यायो भवति ।

## हउं हं अहं सौ सविभक्तेः ॥३२॥

अस्मदः सौ परे हउं हं अहं एते आदेशा भवन्ति, सविभक्तेः । हउं सो णरो । तेण हं दिट्ठो । अहं कयपणामो ।

## अम्हे जसि ॥३३॥

अस्मदो जसि परे अम्हे भवति, सविभक्तेः । अम्हे मणुस्सा सूरा । वयं मनुष्याः शूराः ।

## ममम्मि ॥३४॥

अस्मदोऽम्मिपरे ममादेशोभवति, सविभक्ते । मं पेच्छ । मां पश्य ।

---

३० । तइ इति सिद्धरूपं "वर्गादवर्ग्यम्" इति तयि "कगचजे" त्यादिना तइ । तुम्हम्मीति 'युष्मदो यस्य तः' इति तुष्मद् । । "रय-घाणां सः" इति तुस्मद् "वर्गे" इति तुम्मद् । "सहयोर्लोपे नणमानामधोह्रोऽपदादौ स्थितानाम्" इति तुम्हद् । "अदागमोऽनु-स्वारलोपौ च बाहुलम्" इति [illegible] [illegible] तुम्हम्मि ।

## अम्हे शसि ॥३५॥

अस्मदः शसि परे अम्हे भवति, सविभक्तेः। अम्हे पेच्छ। अस्मान् पश्य।

## मे मए टायां ॥३६॥

अस्मदः टावचने परे मे मए भवतः, सविभक्तेः। मे कतं। मए दिट्ठं।

## मद्दत्तो ङसो ॥३७॥

अस्मदः पञ्चम्येकवचने परे मद्दत्तो भवति, सविभक्तेः। मद्दत्तो तुमं सूरो।

## अम्हाहिंतो भ्यसि ॥३८॥

अस्मदोभ्यसि परे अम्हाहिंतो भवति, सविभक्तेः। अम्हाहिंतो तुमं सूरो।

## मह मज्झ ङसि ॥३९॥

अस्मदः षष्ठ्येकवचने परे मह मज्झ भवतः, सविभक्तेः। मह सीलं। मज्झ गुणा। मम शीलं। मम-गुणाः।

## अम्हमामि ॥४०॥

अस्मदः आमि परे अम्हं भवति, सविभक्तेः। अम्हं [illegible] लोआ। [illegible] लोआ।

मह्न ङौ ॥ ४१ ॥

सविभक्तेः । मह्न । अम्हम्मि । अम्हेसु ।

इति चण्डकृते प्राकृतलक्षणे विभक्तिविधानं
प्रथमं समाप्तम् ।

—❀—

## अथ स्वरविधानमाह—

संस्कृतवत् सन्धिकार्य्यं पदयोः ॥१॥

प्राकृते पदयोर्यत् सन्धिकार्य्यं तत् संस्कृतोक्तवद् भवति ।

स्वराणां स्वरे प्रकृतिलोपसन्धयः ॥२॥

स्वराणां स्वरे परे प्रकृतिर्लोपः सन्धयश्च भवन्ति । इह अच्छति । इहच्छति । इहागतो । मह इव च्छितो । देविंदवंदितो । सक्कोसाणा । स ईसरो । तियसीसो । गहेसो । चंदुज्जला । तपोपरोहो । सा जढ़ा । नीसासूसासा । मोरो । गामअो । गामो । वुद्धोइमा । वुद्धिंदो । वुद्धोसो । वुद्धोअो । नईअो ।

१। इहेति । अत्र तिष्ठतीति संस्कृतम् । "स्वरोऽन्योऽन्यस्य" इति अकारस्य स्थाने इ इत्यस्थिते "रेफः पूर्वश्च" इति

## स्वरस्योद्वृत्तं ॥२॥

**व्यञ्जनसंपृक्तस्वरो यो व्यञ्जने लुप्तेऽवशिष्यते स**

---

इत 'प्रथमद्वितीययोर्द्वितीयचतुर्थौ" इति तकारस्य थकारः इथ। पुनः प्रथमेत्यादिना थकारस्य धकारः, इध। 'ह्रोखघधभानां'इति इह। तिष्ठतीति "कगचजेत्यादिना इठति। "स्वरोऽन्योऽन्यस्य" इति इकारस्य अकारः अष्टति –"षाठः"इति अषति। "रशषाणां सः" इति असति। 'सस्य खच्छाः" इति अच्छति "लोपे वितं" 'तस्मिन् द्वितीये'त्यादिना अच्छति। पुनः "कगजेत्यादिना" अच्छइ। इहच्छतीत्यत्र अकारस्य लोपः। इहागतो अत्र आगत इति सन्धि। मख इव हित इति। देविंद इति देवेन्द्रवन्दितः। सक्केति शक्रश्च ईशानश्च इत्यत्र अलोपः। (लोपः) शक्र अग्ने ईशान; द्विवयणो बहुवयणम्। शक्रश्च ईशानश्च शक्रेशानौ। स ईश्वरः (संधिः) शच्या ईश्वरः शचीश्वरः। (लोपः) तिदश अग्ने ईशः तिदशेशः। तिदशानां ईशः। (संधि) गहेसो इति ग्रहाणां ईशः। चन्दुज्जलेत्यत्र लोपः, चन्द्र अग्ने उज्जला चन्द्रवदुज्जला। तसो इति तपसः उपरोधः, तपोअरोध इति सन्धिः। निःश्वासश्च उच्छ्वासश्च निःश्वासोच्छ्वासौ, अत्र अलोपः। (संधिः) मेरो मयूरः। गामोओ इति ग्रामतः गामो ग्रामः। वड़ो इमा, प्रकृतिः। बुडोन्द्रः, लोपः, बुद्धि इन्द्रः। बुडोसो, सन्धिः। प्रकृतिः, बुड्यः, नद्यः।

उद्धृत उद्धोध्यति। स्वरस्योद्धृते स्वरे परे सन्धिर्न भवति। गगनं गअणं। गन्धकुटी गन्धउडी।

## न युवर्णस्यास्वे ॥४॥

इवर्णस्य उवर्णस्य चास्वे वर्णे परे सन्धिर्न भवति। न वैरिवर्गे अपि अवकाशः। ण वेरिवग्गे वि अवयासो।

## संयोगे परे लोपः ॥५॥

संयोगे परे स्वरे परतः पूर्वस्वरस्य नित्यं लोपो भवति। धनाढ्यः धणड्ढो। देव इन्द्रः देविंदो। कृत उद्योगः कतुज्जोओ।

## ह्रस्वत्वं संयोगे ॥६॥

स्वराणां ह्रस्वत्वं भवति संयोगेऽचरे परे। कव्वं। कज्जं। इच्छिअं। तिक्खं। सिग्धो। उड्ढं। सुज्जो।

---

६। ईच्छिअं, "शेवर्गाद्य" इति ईसितं। "सस्य खछ्हाः" इति ईच्छितं "लोपे द्वित्वं" "तस्मिन् द्वितीये"त्यादिना ईच्छितं, "ह्रस्वत्व"मित्यादिना इच्छितं, "दगचजे"त्यादिना इच्छिअं। तिक्खं इति तीक्ष्णं। वर्णविश्लेषेण "क् ष् ण् अ" इति ततः "रशषां सः" इति तीकसणं। "शाच्च पञ्चमो वा" इति तीकसं। "शे वर्गाद्य" इति तीसं। 'सस्य खछ्हा" इति तीखं 'लोपे द्वित्वं" "तस्मिन् द्वितीये"त्यादिना तीक्खं। "ह्रस्वत्वं संयोगे" इति तिक्खं। सिग्धो स्निग्धं। उड्ढं ऊर्ध्वं।

## स्वरोऽन्योऽन्यस्य ॥७॥

स्वरोऽन्योऽन्यस्य स्थाने भवति। कातव्वं सुइणं। इंगाला। विंशतिः वीसा त्रिंशत् तीसा। वच्छे वुच्छं वच्मि वेम्मि। बुद्दीए। धेनुए नेपुरं। संगृह्णाति संगिण्हइ। कृत्वा कट्टु। नयनविह्वनं सुहं। निर्व्वापयति नीवारिअई। कुत्रापि गच्छति कत्थ पि गच्छति।

## स्वरा रि च ऋवर्णस्य ॥८॥

ऋवर्णस्य स्थाने स्वरा भवन्ति, रि च भवति। घृतं घतं। कृत्वा कातूण। दृश्यते दीसते। ऋषिः इसि। पृथ्वी पुथवी। वृद्धः वुड्ढो। वृन्तं वेंटं। उत्कृष्टं उक्कोसं ऋणं रिणं।

## एरेतः ॥९॥

ऐतः स्थाने ए भवति। वेतड्ढो। तेल्लं। सेंधवं। वेरं।

## अइ च ॥१०॥

ऐतः स्थाने अइ च भवति। ऐश्वर्य्यं अइसरियं। वेरं वइरं।

---

७। कातव्वं कर्त्तव्यम्, सुइणं सूचीनां, बुद्दीए मुद्रा।

९। वेतड्ढो वेतालः। तेल्लं तैलं। सेंधवं सैन्धवं। वेरं वैरं।

## ओर् औतः ॥११॥

औतः स्थाने ओ भवति । ओसहं । सोवच्चलं ।

## अउ च ॥१२॥

औतः स्थाने अउ च भवति । सउरो, कउरवा, कउला । सौधं सउहं । मौनं मउणं । पौरुषं पउरिसं ।

## एदोद्रलोपा विसर्ज्जनीयस्य ॥१३॥

एत् ओत् र लोपा विसर्ज्जनीयस्य स्थाने भवन्ति कतरे गच्छति । दित्तरूपे । देवो । वंभणो । पुणरवि स । एस । वति । बुद्धि । वहू ।

## अदागमोऽनुस्वारलोपौ च व्यञ्जनस्य ॥१४॥

अकारागमोऽनुस्वारलोपौ च व्यञ्जनस्य भवन्ति । अरहंतो । सरिताणं । पडिवयाणं । यत् जं । तत् तं । कम्मं । सम्यक् सम्मं । ईषत् ईसं । सोसं नहं । सिराणं ।

---

१३ । दित्तरूपे दीप्तरूपः । वंभणो ब्राह्मणः । पुणरवि पुनः अपि अत्र र प्रत्ययः । वहू वधूः ।

१४ । अरहंतो अर्हत् । अत्र अदागमः । सरिताणं अत्र

## द्वित्वं बहुत्वेन ॥१५॥

द्विवचनं बहुवचनेन वाच्यं। हत्था। पाया। देवा। वंभणा। णयणा सोहंते।

## षष्ठीवच्चतुर्थी ॥१६॥

षष्ठीवच्चतुर्थी द्रष्टव्या। नमो जिनस्स। नमो गुरुणो।

## प्रथमाया द्वितीया आर्षे ॥१७॥

चतुर्विंशतिरपि जिनवराः। चउवीसं वि जिणवरा तित्थयरा मे पसीअंतु।

## सप्तम्यास्तृतीया आर्षे ॥१८॥

तेणं कालेणं तेणं समएणं। तस्मिन् काले तस्मिन् समये।

---

तकारस्य अ आगमः। सरित् अदागमः। कम्मं कर्म्म अत्र रेफलोपो नकारोऽनुस्वारः। सीसं शीर्षम् अत्र रेफलोपः। सिरासं शिरसि अत्र सलोपः।

---

१५। हत्था हस्तौ, पाया पादौ, देवा देवौ, वंभना ब्राह्मणौ।

१६। नमो जिनस्स नमो जिनाय। नमो गुरुणो नमो गुरवे। जिनस्य गुरूणां इत्यत्र चतुर्थी ज्ञेया।

## न प्लुतङनञाः॥ १९॥

प्लुता वर्णाः ङकारनकारञकाराश्च प्राकृते न भवन्ति। श्लोकः—

ऐ औ स्वरौ ततः पश्चात् ऋ ॠ ऌ ॡ चतुःस्वराः।
अः ङ ञ नशषाः संति प्राकृते नैव कर्हिचित्॥

ऐदौतौ च केषाञ्चिन्मते भवत एव। कैतवं कैअवं। सौदर्य्यं सौअरिअं। कौरवाः कौलवाः कौरवा। ङञौ अपि स्ववर्ग्यसंयुक्तौ भवत एव। अहंकारः हङ्कारो। अंजितं अञ्जिअं।

---

१९। ऐऔ स्वरावित्यादौ गाथा—
तेत्तीस विंजणाइं सत्तवीसा सरा तहा भणिआ।
चत्तारिअ जोगवहा चउसठ्ठी मूलवण्णाओ।

हयवरल। जणनङम। झढधघभ। जडदगब। छठथखफ। चटत.कप। शषस। अ आ आः। इ ई ईः। उ ऊ ऊः। ऋॠॠः। ऌॡॡः। ए ए एः। ऐ ऐ ऐः। ओओओः। औ औऔः! ग्रकथ्यंअं अः। इति—चतुःषष्ठी मूलवर्णाः संस्कृतस्य, प्राकृते तु केवलं द्विपञ्चाशद् वर्णाः। अत्र गाथायां ओ इति सम्बोधनं पादम्। अः इति विसर्ज्जनीयः। अकार उच्चारणार्थः तथाहि—"छत्र-वद्धालवत्तस्य वालिकाकुचयुग्मवत्। नेत्रवत् कृष्णसर्पस्य विसर्गोऽयमिति स्मृतः॥" इति।

## अनुस्वारो बहुलं ॥२०॥

अनुस्वारस्य क्वचिल्लोपो भवति। क्वचिदागमः, क्वचित्प्रकृतिः। क्वचिदर्द्धानुस्वारोऽपि भवति। वंभणा। मंजरो। विंचुओ। चुंनो। काणं। काहं। नईहिं। सक्कतं। सक्कारो। वीसा। तीसा। लोपः। संगा। भंगोः। देविहिं, प्रकृतिः। देविहि, लोपः। देविहिँ, अर्द्धानुस्वारः। दुहं समिद्धं।

## गोर्गावि ॥ २१ ॥

गोशब्दस्य गावि इति भवति निपातेन। गावो गावीओ। गावीं गावीए। गावीहिं गावीहिंतो। गावीणं गावीसु।

## एवार्थे णइचेयचिआः ॥२२॥

एव शब्दार्थे णइ चेय चिय एते आदेशा भवन्ति। गत्या एव गति णइ। मति णइ। तं चेय। सच्चिय।

---

२०। मंजरो मार्ज्जारः। चुंनो चूर्णः। सक्कतं संस्कृतं।

२१। गवो इति। गोः, गावः गाः, गां; गवा, गैः, गोः गवि, गोभिः, गोभिः, गोभ्यः गवां गोनां, गोषु।

२२। तं चेय तमेव। सच्चिय स एव।

## अप्यस्योरलोपः ॥२३॥

अपि असि च एतयोरस्य लोपो भवति । त्रूरो पि । कतं पि । तं सि इह ।

## तुत्ताच्चाट्टुतुण ओप्पिपूर्व्वकालार्थे ॥२४॥*

एते पूर्व्वकालार्थे भवन्ति । वंदित्तु वंदित्ता । सुच्चा । कट्टु । भोतुं । भोतूण । वंदिओ । एवं कप्पि ।

## मत्वर्थे आलइल्लौ ॥२५॥

मत्वर्थे एतौ प्रत्ययौ भवतः । जडालो जडिल्लो । फडालो फडिल्लो ।

वतोर् मतोर् इल्ल उल्ल आल आलू इरा मणः ।
वत्तो मा मत्त इत्ताश्च यथा लक्ष्यं दश स्मृताः ॥
शोभवान् सोहिल्लो, विकारवान् विआरुल्लो,

---

*"तुत्ताचाट्टुत्तुं तूण तुआण ओ वि प्पिणु वेप्पिणु पूर्व-कालार्थे ॥२४॥ काउआण । वंदेवि । वंदेप्पिणु पणवेप्पिणु । इति क्वचित् पुस्तकेऽधिको वर्त्तते ।

२४ । वंदित्ता वन्दित्वा । सुच्चा मुत्वा । कट्टु क्षान्त्वा । भोतुं भुक्ता । भोत्तूण भक्ता । वंदिनौ बन्दित्वा । एवं चप्पि एवं काम्चा

श्रद्धावान् सद्धालो, स्नेहवान् नेहालू, गर्व्ववान् गव्विरो, धनवान् धणमणो धणवन्तो, हनुमान् हणुमा हणुमन्तो, पुण्यवान् पुण्णमन्तो, मानवान् माणइत्तो, काव्यवान् कव्वइत्तो। तत्रभवेऽपि इल्ल उल्लौ। ग्रामे भवः गामिल्लो, पुरे भवः पुरिल्लो। अधोभवः अधोहेटः अधःस्थाने हेट्टादेशो भवति। हेट्ठिल्लो। उपरि भवः उवरिल्लो। आत्मनि भवः अप्पुल्लो।

## ता ताव जा जावाम् तावद्यावतोः ॥२६॥ *

तावच्छब्दस्य यावच्छब्दस्य तु ताताव जाजावौ भवतः।

गाथा—

ता विच्छिरणं गयणं ताव च्चिय जलहिणोपि गंभीरा।
ता गुरुआ सुरसेला धारेहि न जाव लिज्जंते॥

## उपमाने पिव इव विव विय व्व व जहा वतः ॥ २७॥

उपमानार्थे वतः शब्दस्य एते आदेशा भवन्ति।

चंदणं पिव। चमरमिव। कमलं विव तुज्झ मुहं।

---

* कश्चित्—ता ताव तावतः ॥२६॥ इति सूत्रम्।

२६। ता तावेति। तावत् विस्तीर्णं गगनं तावत् एव जलधयः च गंभीराः। यावत् गुरुः सुरशैलः धाराभिः न यावत् गृह्यन्ते॥ इति छाया। गुरुआ गुरुः। एदोद्रे त्यादिना गुरुओ। स्वरी इत्यादिना गुरुआ।

गिम्हो विय । सायरव्व । सेसस्स व एस फणो तुह भाति जसो जह्वा संखो ॥

## ओत्वमवापयोः ॥ २८ ॥

अव-अपयोः स्थाने ओ भवति । अवहसितं ओहसितं । अपसरितं ओसरितं । अपवरकः ओवरओ ।

## खलोः खु ॥२९॥

खलु शब्दस्य स्वरादेशो भवति । एवं खु जंतं-पीलणं । गाथा—

गुरुलहुअपयत्थाणं तग्गुणमुल्लं हवेइ सव्वेसिं ॥
छुहि अतिसिआण भोज्जं जलपाणं तं अमुल्लं खु ॥

## तो वर्त्तमानार्थे ॥३०॥

यो वर्त्तमानकालार्थे आनप्रत्ययस्तस्यार्थे तकारो

---

२७। चंदगं "अनुस्वारो बहुल" इति अनुस्वारः। तव मुखं कमलवत् । एष इत्यादि—एषः फणः तव भाति यशः शङ्खवत् ।

२९। जंतपीलणं यन्त्रपीड़नम् । गुरुलघुपदार्थानां तद्गुण-मौल्यं भवति सर्व्वेषां । क्षुधिततृषितानां भोज्यं जलपानं तद् अमौल्यं खलु ॥ इति छाया ।

भवति। विद्यमानं भिज्जंतं। कथ्यमानं कथिज्जंत। साध्यमानं साहिज्जंतं।

## भे सर्व्वासु युष्मदः ॥ ३१॥

युष्मच्छन्दस्य सर्वासु विभक्तिषु भे भवति। भे सुण त्वं शृणु। भे निसामेथ यूयं निशम्यत। भे मणामि त्वां भणामि। भे कतं त्वया कृतं। भे कयं युष्माभिः कृतं। भे अहं निक्किट्ठो त्वं अहं निःकृष्टः। भे अहं सूरो युष्मदहं शूरः। भे देशो तव देशः। भे देसो युष्माकं देशः। भे णिहिदं त्वयि निहितं। भे णिहिदं युष्मासु निहितं।

## अस्मदोऽपि ॥३२॥

अस्मच्छन्दस्यापि सर्व्वासु विभक्तिषु भे भवति। भे भणाभो वयं भणामः। भे मण मां मण। भे मप्प अस्मान् मण। नेहेन भणामो भे तुवभे वयं युष्मान् स्नेहेन भणामः। भे कयं मया कृतं। भे कयं अस्माभिः कृतं। भे णिक्किट्टो मत् निःकृष्टः। भे तं णिक्किट्टो अस्मत् त्वं निःकृष्टः। भे :देसो मम देशः। भे देसो अस्माकं देशः।

भे णिहिदं मयि निहितं। भे णिहिदं यस्मासु निहितं॥ *

---

* इतोऽन्तरे सन्ति पुस्तकान्तरे एतानि एकादशसूत्राणि यथा—

इजेराः पादपूरणे॥ १॥ जि अव्ययं एवार्थे॥ २॥ णवरि आनन्तर्य्यार्थे॥ ३॥ णवरु केवलार्थे॥ ४॥ यदेः छुडु॥ ५॥ थू थु छिक कुत्सायां॥ ६॥ दड़वड़ शीघ्रार्थे॥ ७॥ दड़वड़ होइ विहाणु॥ पूर्णा गाथा यथा—

"ढोला मइँ तुहुँ वारिआ मा कुरु दीहा माणु।
णिद्दए गमिही रत्तड़ी दड़बड़ होइ विहाणु॥"

मानं प्राप्तं नायकं प्रति काचित् नायिका उक्तवती। ढोला हे नायक, मया त्वं वारितः दीहा दीर्घं मानं दर्पं मा कुरु न करणीयमित्यर्थः। निद्रया रात्रिर्गमिष्यति। दड़बड़ शीघ्रं विभातं प्रभातं होइ भवति।

अतिरभसाद् ऊर्द्धमुखस्येतस्ततो गमने डवडव॥ ८॥ डवडव चरियाए॥ णं णउणाइ णावइ जणि जणु मणु इवार्थे॥ ९॥ मिव पिव विव व्व व विअ इवार्थे वा भवन्ति। दाणिं एत्थ(ं) एत्तहे एवहिं इदानीमः॥ १०॥ यथा तथा अनयोः स्थाने जिमतिमौ॥ ११॥ दोहा—

"कालु लहे विणु जोइया जिम जिम मोहु गलेइ।
तिम तिम दंसणु लहइ जो नियमें अप्पु मुणेइ॥"

## इतेरियः ॥ ३३ ॥

इति शब्दस्य इय आदेशो भवति। इय एवं।

## भावे त्तणः ॥ ३४ ॥

भावार्थे त्तणः प्रत्ययो भवति। गामत्तणं। नयरत्तणं।

## नो ङः ॥ ३५ ॥

स्वरात् परस्य असंयुक्तस्य अनादेर्नस्य प्रायो ङो भवति। सं हननं। संहङणं संघङणं संहणणं॥

इति श्रीचण्डकृतप्राकृतलक्षणे स्वरविधानं द्वितीयं समाप्तम्।

—०—

## अथ व्यञ्जनविधानमाह—

## ह्राद् यवौ लोप्यौ ॥ १ ॥

ह्रात् हकारात् यकारवकारौ परत्र अवस्थितौ लोप्यौ भवतः। मुह्यते मुज्झते। दह्यते दज्झते। विह्वलः विब्भलो। जिह्वा जिब्भा।

---

कालं लड़ा जायायाः यथा यथा मोहः लगति, तथा तथा दर्शनं लभते यावत् नियमेन आत्मानं मन्यसे। इति।

## शवलेभ्यो व्यञ्जनम् ॥ २ ॥

शवलेभ्यः परं व्यञ्जनं लोप्यं भवति। स्वयं सयं। स्वर्गं सग्गं। श्रोतव्यं सोतव्वं। काव्यं कव्वं। शल्यं सल्लं। विल्वं विल्लं। शश्यं सस्सं। श्रुतं सुतं। श्लेष्मा सिब्भा।

## वर्गे ॥ ३ ॥

वर्गे च परे तल्लोप्यं भवति। शक्तः सत्तो। रक्तं रत्तं। स्पष्टं फुडं। स्पष्टं पुढ्ढं। उत्कृष्टं उक्किढ्ढं। नष्टः णट्ठो। दुष्टः दुट्ठो। सृष्टः सुट्ठो। दुग्धं दुद्धं। वच्मि वेम्मि। षट्कं छक्कं। षट्पदः छप्पओ। खड्गं खग्गं। षण्मुखः छम्मुहो। आत्मा अप्पा। उत्पलं उप्पलं। सद्भावं सब्भावं। मन्मथः मम्मथो। प्राप्तं पत्तं। प्रद्युम्नः पज्जुम्मो। अर्कः अक्को। उल्का उक्का। भास्करः भक्खरो। कः करोति को करइ। कः पचति को पयइ। ब्रह्मा बम्हा।

## श्रे वर्गाद्यम् ॥ ४ ॥

वर्गाद्यं श्रे परे लोप्यं भवति। वृत्तः वच्छो। क्षमा खमा। संवत्सरः संवच्छरो। मत्सरः मच्छरो। अप्सराः अच्छरा। ईप्सितं इच्छितं।

## वर्गादवर्ग्यम् ॥ ५ ॥

वर्गात् परमवर्ग्यं व्यञ्जनं लोप्यं भवति। सौख्यं सुक्खं। शक्रः सक्को। क्लीवः कीवो। विध्वंसितं विद्धंसितं। ऊर्ध्वं उड्ढं। प्राप्तं पत्तं।

## शाच्च पञ्चमो वा ॥ ६ ॥

वर्गपरः शपरश्च वर्गपञ्चमो वा लोप्यो भवति। ज्ञानं नाणं। यत्नं जत्तं। लक्ष्मणः लक्खणो। लक्ष्मी लच्छी। तीक्ष्णं तिक्खं। आत्मा अप्पा आया अत्ता अन्ना। सर्वज्ञः सव्वण्णु। वेति किं? वच्मि वेद्मि।

## दोवे। ७ ॥

दकारो वकारे परे लोप्यो वा भवति। द्वारं वारं। वेति किं? दारं।

## षाट्टः ॥ ८ ॥

षकारात् परष्टकारो वा लोप्यो भवति। उत्कृष्टं उक्कोसं। स्पष्टं फुटं पुट्टं उक्किट्टं।

## रेफः पूर्व्वश्च ॥ ९ ॥

सर्व्वस्माद्व्यञ्जनात् परः पूर्व्वस्थश्च रेफो लोप्यो भवति। तर्कं तक्कं। अर्कः अक्को। मूर्खः मुक्खो।

न्यग्रोधः निग्गोहो। स्वर्गं सग्गं। शीघ्रः सिग्घो। अर्घः अग्घो। अर्चनं अच्चणं। वज्रं वज्जं। दुर्जनः दुज्जणो। उष्ट्रः उट्टो। सुवर्णं सुवस्सं। सक्तुः सत्तू। कर्त्तव्यं कातव्वं। कर्द्दमं कद्दमं। जर्द्धं उड्ढं। प्रवरः पवरो। भ्रमरः भवरो भमरो भमलो। सर्पः सप्पो। विभ्रमः विब्भमो। दर्भः दब्भो। आम्रं अंवं। धर्म्मः धम्मो। सूर्य्यः सुज्जो। व्रतं वतं। पर्व्वतः पव्वतो। श्रुतं सुतं। ह्रस्वः हस्सो। प्रथमशब्दस्य चत्वारि रूपाणि—पुढुमो पढुमो पढ़मो पुढमो। स्त्री थी।

## असंयोगस्य ॥ १० ॥

अत ऊर्द्धं ये व्यञ्जनादेशा स्ते असंयोगस्य भवन्ति। गृहं घरं। स्तम्भः खंभो।

## प्रथमद्वितीययोर्द्वितीयचतुर्थौ ॥११॥

वर्गाणां प्रथमद्वितीययोः स्थाने यथासंख्यं द्वितीय-चतुर्थौ आदेशौ भवतः। भास्करः भक्खरो। निश्चयः निच्छयो। दुष्टं दुट्ठं। स्तम्भः थंभो। परुषं फरुसं। विचयते विज्झते। दंष्ट्रा दाढ़ा। मथुरा मधुरा। नाथः नाधो। *

* पुस्तकान्तरे—

तृतीयचतुर्थयोः प्रथमद्वितीयौ ॥ ११ ॥

## प्रथमस्य तृतीयः ॥१२॥

प्रथमस्य स्थाने तृतीयो भवति। एकं एगं। तीर्थ-कर: तित्थगरो। पिशाचो पिसाजो। जटा जडा। क्षतं कदं। प्रतिषिद्धं पडिसिद्धं। जिनप्रतिमा जिणपडिमा। वितस्तिः विहत्थी। वसतिः वसही। भरतः भरहो। कातरः काहलो। मातुलिङ्गः माहु-लिंगो। पापं पावं। पुत्रः विट्टो। पुत्रो विट्टो। प्रच्छे वुच्छे।

## ह्रौ खघधभानाम् ॥१३॥

खकारघकारधकारभकाराणां स्थाने हकारो भवति। मुखं मुहं। मेघः मेहो। मधवः महवो। वृषभः वसहो।

---

वर्गाणां तृतीयचतुर्थयोः स्थाने यथासंख्यं प्रथमद्वितीयौ भवतः। नगरं नकरं। मार्गणः मक्कणो। गिरितटं किरितटं। मेघः मेखो। व्याघ्रः वक्खो। घर्मः खम्मो। राजा राचा। जर्जरं चच्चरं। जीमूतः चीमूदो। निर्झरः णिच्छरो। झर्झरः छच्छरो। तड़ागं तड़ाकं। मण्डलं मंढलं। डमरुकः ढमरुको। गाढ़ं काठं। षण्डः संठो। ढक्का ठक्का। मदनः मतणो। कन्दर्पः कंतप्पो। दामोदरः तमो-तरो। मधुरं मथुरं। बंधवः पंथवो।

## सस्य खछहाः ॥१४॥

सकारस्य स्थाने खछहा भवन्ति। भिचा भिक्खा। षण्मुखः छम्मुहो। पाषाणः पाहाणो। दश दह।

## यस्य जः ॥१५॥

यकारस्य स्थाने जकारो भवति। यौवनं जुव्वणं। सूर्य्यः सुज्जो। यात्रा जत्ता।

## पवयोर्म्मो वा ॥१६॥

पकारवकारयोः स्थाने मकारो वा भवति। शवरः सवरो समरो। स्वप्नः सिविणो सिमिणो। नीवी णीवी णीमी। पूर्व्वः पुव्वो पुरिमो।

## तवर्गस्य चटवर्गौ ॥१७॥

तवर्गस्य स्थाने चटवर्गौ भवतः, यथासंख्यम्। नित्यं णिच्चं। पथ्यं पच्छं। विद्या विज्जा। वध्या वंझा। नृत्यं णट्टं स्थितः ठितो। दण्डः डंडो। दग्धः दड्ढो। धान्यं धण्णं। वर्द्धमानः वड्ढमाणो। वृद्धः वड्ढो। खिद्यते खिज्जए। रुदितं रुण्णं।

## युष्मदो यस्य तः ॥१८॥

युष्मत्सम्बन्धिनो यकारस्य तकारो भवति। तुम्हेहि।

## जस्य रः १९ ॥

जकारस्य स्थाने रकारो भवति। व्युत्सृजामि वोसरामि। व्युत्सृजति वोसरइ। यष्टिः लट्ठी। यष्टिका लट्ठिश्रा।

## रशषाणां सः ॥२०॥

रेफशकारषकाराणां स्थाने सकारो भवति। शिरं सीसं। शशो ससो। आमिषं आमिसं।

## हजथानां रनखाः ॥२१॥

हजथानां स्थाने रनखा भवन्ति, यथासंख्यम्। गृहं घरं। ज्ञानं णाणं। राजा राणा। आज्ञा आणा। स्तम्भः खंभो।

## गरह्वाणां घणभ्काः ॥२२॥

गरह्वाणां स्थाने घणभ्का भवन्ति यथासंख्यम्। गृहं घरं। करवीरः कणवीरो। करीर, कणीयो। करोति कुणइ। भगिनी वहिनी भइणी। वाह्यः वज्भो।

## मडह्वानां वलभाः ॥२३॥

मडह्वानां स्थाने यथाक्रमं वलभा भवन्ति। मन्मथः वम्मथो। षोड़श सोलस। जिह्वा जिब्भा। वड़मुखं

वलमुहं । गरुड़: गरुलो । तड़ाग: तलाओ । क्रीड़ति कीलइ । स्फटिक: फलिहो ।

## यवयोर्व्यत्यास: ॥२४॥

यकारवकारयो र्व्यत्यासो भवति । पर्य्यङ्क: पल्लंको । वैदूर्य्य: वेदुलिओ । त्रयोदश तेरह । वृक्ष: रुक्खो ।

## पवयोर्व्यत्सास: ॥ २५ ॥

परयोर्व्यत्सासो भवति । पापं पावं ।

## शहयोर्लोपे नणमानामधोहोऽपदादौ स्थितानाम् ॥२६॥

नणमानां संबंधिनो यौ शहौ तयोर्लोपे हकारागमो भवति । अधोऽपदादाववस्थितानां । प्रश्न: पण्हो । तृष्णा तण्हा । यस्मात् जम्हा । कृष्ण: कण्हो । ग्रीष्म: गिम्हो । उष्मा उम्हा । कस्मात् कम्हा । तस्मात् तम्हा । तस्मिन् तम्हि । गृह्णाति गिण्हति । वह्नि: वण्हो । जिह्म: जिम्हो । निह्नवितं णिण्हविअं । निह्नविका णिण्हविआ । अपदादाविति किं ? श्मशाणं मसाणं ।

## लोपे द्वित्वम् ॥ २७ ॥

संयोगाक्षरस्य लोपेऽवशेषस्य द्वित्वं भवति। दुर्गा दुग्गा। शक्रः सक्को। तस्करः तक्करो। व्याघ्रः वग्घो।

## क्वचिदलोपेऽपि ॥ २८ ॥

क्वचिदलोपेऽपि द्वित्वं भवति। न ज्ञायते न नज्जते। वाध्यते वाहिज्जते।

## तस्मिन् द्वितीयचतुर्थयोः प्रथमतृतीयौ ॥२९॥

तस्मिन् द्वित्वे वर्त्तमानयो र्द्वितीय-चतुर्थयोः स्थाने प्रथम तृतीयौ भवतः। सौख्यं सुक्खं। अर्घः अग्घो। पथ्यं पच्छं। साध्यः सज्झो। षष्ठः छट्ठो। वृद्धः वुड्ढो। पार्थः पत्थो। वर्द्धमानः वड्ढमाणो। पुष्पं पुप्फं। जिह्वा जिब्भा।

## स एवान्येषाम् ॥३०॥

अन्येषां युक्तायुक्तविशेषाणां द्वित्वे स एव भवति। अर्कः अक्को। सत्यं सच्चं। भुक्तं भुत्तं। धान्यं धन्नं। सर्पः सप्पो। शुल्कं सुल्कं। काव्यं कव्वं। शस्यं सस्सं।

## न पदादौ ॥ ३१ ॥

पदादौ द्वित्वं न भवति। क्रोधः कोहो। क्षुद्रः खुद्दो। पदादाविति किं? भद्रः भद्दो।

## क्वचिदन्यत्रापि ॥३२॥

क्वचित् पदमध्येऽवसाने च लोपे कृते द्वित्वं न भवति। काश्यपः कासवो। वैश्रवणः वेसवणो। स्पष्टं फुटं। कर्त्तव्यं कातव्वं। शीर्षः सीसो। दीर्घः दीहो। उत्कृष्टं उक्कोसं।

## संयोगस्येष्टस्वरागमोमध्ये ॥ ३३ ॥

द्वयोर्व्यञ्जनयो र्मध्ये इष्टस्वरागमो भवति। अग्निः अगणी। विश्लेषः विसलेसो। प्लक्षः पलक्खो। रत्नं रतणं। वर्षं वरिसं। श्रीः सिरी। ह्रीः हिरी। अर्हत् अरहंतो। आचार्य्यः आयरिओ। स्त्री इत्थी। सूर्य्यः सूरियो। सर्षपः सरिसपो। वैदूर्य्यः वेदुलिओ। क्षमा खिमा। सूक्ष्मं सुहुमं। पद्मं पदुमं। तन्वी तणुवी। लघ्वी लहुवी। गुर्व्वी गुरुवी। पृथ्वी पुहवी। बह्वी बहुवी। मृद्वी मदुवी। स्यात् सिया। स्याद्वादः सियावाओ। भव्यः भविओ। स्वः कं सुवे कअं। स्वे जनाः सुवे जना। ज्या जीआ।

## यवयोरिदुतौ ॥ ३४ ॥

यवयोः स्थाने इकारोकारौ भवतः। त्रयोदश तेरह। त्रयस्त्रिंशत् तेतीसा। त्रयोविंशतिः तेवीसा। भवति होति।

## संख्यायास्त्रिशयोर्लोपः ॥३५॥

संख्यायाः संबन्धितिशयोर्लोपो भवति। विंशतिः वीसा। पञ्चाशत् पस्सा।

## तस्य च ॥३६॥

संख्यासम्बन्धिनं तकारस्य च लोपो भवति। पञ्च-पञ्चाशत् पणपस्स।

## कटतीययोः स्वरे ॥३७॥

ककारस्य वर्गतृतीयस्य च स्वरे परे लोपो भवति। कोकिलः कोइलो। भोगिकः भोइओ। राजो राइ। प्रतिकूलः पइकूलो। नदी नई। काको काइ। शकुनः सउणो। काकेन काएण। काकः काओ। त्यागिनां चाइणं। प्रगुणः पउणो। अवगूढः अवऊढो। त्यागेन चाएण। त्यागः चाओ। सुचिरं सइरं। शुचिः सुइ। प्रचुरेण पउरेण। पिशाचेन पिसाएण। पिशाचः पिसाओ। वनराजिफलं वणराइफलं। वनराजी वन-

राई। प्रजुष्टं पउट्टं। गजेन गएण। गजः गओ। पतिना पइणा। गोमती गोमई। जतूना जउणा। वातूलः वाउलो। वातेन वाएण। वातः वाओ। मदिरः मइरो। पादुका पाउआ। मदेन मएण। मदः मओ। कूपिका कूइआ। कपोनां कईणं। नूपुरं णेउरं। रिपूणां रिऊणं। कूपेन कूएण। कूपः कूओ कूवो। कविना कइणा। कापुरुषं कावूरिसं काउरिसं। रवेण रएण। देवः देओ। मयि मइ। प्रयुक्तं पउत्तं। मयूरः मऊरो। विप्रयोगः विप्पओओ।

## कगचजतदपयवां प्रायोलुक् ॥३८॥

स्वरात् परेषामनादिभूतानामसंयुक्तानां कगचजतद-पयवां प्रायोलुग् भवति। काकः काओ। नागः णाओ पिशाचः पिसाओ। गजः गओ। शितं सिअं। मदः मओ। नूपुरं णेउरं। निश्चयः निच्छओ। देवः देओ। अनादेरिति किम्? कालो गन्धो, चोरो, परउट्ठो। क्वचिदादेरपि—पुनः उणो, गन्धं, अन्धं, च अ, वृषभः, उसहो। असंयुक्तस्येति किम्? अर्कः अक्को। चक्रं चक्कं। क्वचित् संयुक्तस्यापि—नक्तंचरः णत्तंचरो। नमस्कारः णमोयारो णवयारो। प्रायो-ग्रहणात् क्वचिन्न भवति। शपथः सवहो। शापः

सावो। प्रयागजलं पयागजलं। प्रयुक्तं पजुत्तं।
विप्रयोगः विप्पजोओ।

## यत्वमवर्णे ॥३९॥

ककारवर्गतृतीययोरवर्णे परे यत्वं भवति। काकाः
काया। नागाः नाया। पिशाचाः पिसाया। वनराजा
वणराया। माता माया। यदा जया। पापफलं
पायहलं। अवर्ण इति किम्? देवाः देआ। पिता
पिआ। लोकस्य लोअस्स। भुवनं भुअणं। क्वचिद्
भवत्येव पिवति पियइ।

## शिष्टप्रयोगाद् व्यवस्था ॥४०॥

व्यवस्था वर्णाविस्थानं शिष्टप्रयोगाद् ज्ञातव्या। अर्कः
अक्को। सूर्यः सूरिओ। भिक्षा भिक्खा। लक्ष्मी लच्छी।

## न लोपोऽपभ्रंशेऽधो रेफस्य ॥४१॥

अपभ्रंशेऽधोरेफस्य लोपो न भवति। वरलु ग्रामोः।
वाघ्रोघसि जादि।

## पैशाचिक्यां रणयोर्लनौ ॥४२॥

पैशाचिक्यां रेफस्य लकारो भवति, णकारस्य
नकारः। अले अले टुट्ठलक्खसा पनमत पणयिच्छितासा।

---

(४१) वरलु ग्रामः व्याघ्रः ग्रसित्वा याति। (४२) अले
इति—अरे अरे दुष्टराक्षसाः प्रणमतप्रणयिक्षिताश्याः।

## मागधियां रसयोर्लशौ ॥४३॥

मागधिकायां रेफसकारयोर्लशौ भवतः। चन्द्र-कलनिकलं हवति। शेशे। हंशे। पशुत्ते। पुरुषः पुलिशे। एषः एशे। मेषः मेशे। गाथा—

लहशवशनमिलशुलशिलविअलिदमं-
दाललाजिदंहिजुशे।
वीलजिणे पक्खालदु मम शयलम्
अवज्जजं बालं॥

## शौरसेन्यां तकारस्य दकारो वा भवति ॥४४॥

दाव ताव। कदं कयं। गदं गयं। सुदं सुअं इत्यादि।

संस्कृतं प्राकृतञ्चैवापभ्रंशोऽथ पिशाचिकी।
मागधी शौरसेनी च षड्भाषाश्च प्रकीर्त्तिताः॥

इति श्रीचण्डकृतप्राकृतलक्षणे व्यञ्जनविधानं
तृतीयं समाप्तम्।
संपूर्णमिदं प्राकृतलक्षणम्।

---

(४३) लहशवशनेत्यादि—

रभस-वश-नम्र-सुर-शिर-विगलित-मन्दार-राजिताङ्घ्रियुगः।
वीरजिनः प्रक्षालयतु मम सकलमवद्यजं मालम्॥

# আমাদের প্রকাশিত

## কতিপয় উৎকৃষ্ট পুস্তক

১। প্রবন্ধকল্পলতিকা—কাব্য ও ব্যাকরণের আদ্য, মধ্য ও উপাধি পরীক্ষার সমস্ত পুস্তকের সমালোচনা ইত্যাদি ১॥০

২। সটীককবিরহস্য ॥০

৩। সটীকবৃত্তরত্নাকর ॥০

৪। সটীক সারমঞ্জরী ॥০

৫। প্রাকৃতপ্রকাশ ( প্রাকৃত ভাষার ব্যাকরণ ) ১।০

৬। লকারার্থনির্ণয় ৵০

৭। সানুবাদ লিঙ্গানুশাসন ।।০

৮। কিরাতার্জ্জুনীয় ( ১—৩ সর্গ ) ১৲

৯। কুমারসম্ভব—অন্বয়, বাচ্যান্তর, মল্লিনাথীটীকা, হিন্দী, বাঙ্গালা অনুবাদ চিত্রাদি সহ ১॥০

১০। হিতোপদেশীয় মিত্রলাভ—অন্বয়, বাচ্যান্তর, উৎকৃষ্টটীকা হিন্দী বাঙ্গালা অনুবাদ চিত্রাদি সহ ১॥০

১১। সংস্কৃত মঞ্জরী ( বালকদিগের পরমপোযোগী ) ।৵০

১২। শ্রুতবোধ—উৎকৃষ্টটীকা, হিন্দী বাঙ্গালা অনুবাদসহ ৶০

১৩ বেদান্তসার ( রামানুজ কৃত ). ১॥০

১৪। সাংখ্যকারিকা—গৌড়পাদভাষ্য টীকা ও বঙ্গানুবাদ সহ ১॥০

১৫। সটীকসাংখ্যসার ॥০

১৬। পাতঞ্জল যোগদর্শন—মণিপ্রভাবৃত্তি, হিন্দী ও বঙ্গানুবাদ সহ ১॥০

১৭। সামবেদসংহিতা ( আগ্নেয় পর্ব্ব ) সায়ণভাষ্য, ঋষি, ছন্দ, দেবতা ও বঙ্গানুবাদসহ— ॥৵০

১৮। শ্রীশ্রীচণ্ডী ( তালপত্রে ) উৎকৃষ্টবিশুদ্ধ সংস্করণ ১।০

১৯। গীতা—অন্বয়, শ্রীধরস্বামীটীকা ও বঙ্গানুবাদ সহ ১॥০

সংস্কৃত পুস্তকালয়—

৫৮, কর্ণওয়ালিস্ ষ্ট্রীট, কলিকাতা।